ॐ भूर्भुवः स्वः ऋद्धि सिद्धि सहिताय श्री गणेशाम्बिके घृतं स्नानं समर्पयामि। घृत स्नानान्ते शुद्धोदक स्नानम्।
**मधुस्नानं –** ॐ मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः। माध्वीर्न्नः सन्त्वोषधीः।। मधु नक्तमुतोषसो मधुमत्पार्थिव ठ॰ रजः। मधु द्यौरस्तु नः पिता।। मधुमान्नो वनस्पति र्मधुमाँऽअस्तु सूर्य्यः। माध्वीर्गावो भवन्तुनः।। पुष्परेणुसमुद्भूतं सुस्वादु मधुरं मधु। तेजः पुष्टिकरं दिव्यं स्नानार्थं प्रतिगुह्यताम्।। ॐ भूर्भुवः स्वः ऋद्धि सिद्धि सहिताय श्री गणेशाम्बिके मधुस्नानं  समर्पयामि। मधुस्नानान्ते शुद्धोदक स्नानम्।।
**शर्करास्नानम् –** ॐ अपा ठ॰ रसमुद्वयस ठ॰ सूर्ये सन्त ठ॰ समाहितम्। अपा ठ॰ रसस्य यो रसस्तं वो गृह्णाम्युत्तममुपयामगृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम्।। इक्षुरससमुद्भूतां शर्करां पुष्टिदां शुभाम्। मलापहारिकां दिव्यां स्नानार्थं प्रतिगृह्यताम्।। ॐ भूभुर्वः स्वः ऋद्धि सिद्धि सहिताय श्री गणेशाम्बिके शर्करा स्नानं समर्पयामि। शर्करा स्नानान्ते शुद्धोदक स्नानं समपर्यामि
**पञ्चामृत स्नानम् –** ॐ घृतेन सीतामधुना समज्ज्यतां विश्वै देवैरनुमतामरुद्भिः।। ऊर्ज्जस्वती पयसापिन्वमानास्म्मान्त्सीते पयसाभ्यावृत्स्व।। ॐ पञ्च नद्यः सरस्वतीमपि यन्ति सस्रोतसः। सरस्वती तु पञ्चधा सो देशेऽभवत्सरित्।। पयोदधि घृतं चैव शर्करा मधुसंयुतम्। पञ्चामृतं मयानीतं स्नानार्थं प्रतिगृह्यताम्।। ॐ भूर्भुवः स्वः ऋद्धि सिद्धि सहिताय श्री गणेशाम्बिके  पञ्चामृतं स्नानं समर्पयामि। पञ्चामृत स्नानान्ते शुद्धोदक स्नानम्।
**गन्धोद्धक स्नानं –** ॐ गन्धर्वस्त्वा विश्वावसुः परिदधातु विश्वस्यारिष्टयै यजमानस्य परिधि रस्यग्निरिडऽईडितः।। ॐ त्वां गन्धर्वा अखनंस्त्वामिन्द्रस्त्वाम् बृहस्प्पतिः। त्वामोषधे सोमोराजा विद्वान्यक्ष्मादमुच्यत्।। ॐ भूर्भुवः स्वः ऋद्धि सिद्धि सहिताय श्री गणेशाम्बिके गन्धोदक स्नानं समर्पयामि। गन्धोदक स्नानान्ते – शुद्धोदक स्नानं समर्पयामि।
**उद्वर्तनस्नानं –** ॐ अ ठ॰ शुनाते अ ठ॰ शुः पृच्च्यतांपरुषापरुः। गन्धस्ते सोममवतु मदायरसोऽअच्च्युतः।। ॐ भूर्भुवः स्वः ऋद्धि सिद्धि सहिताय श्री गणेशाम्बिके उद्वर्तन स्नानं समर्पयामि। उद्वर्तन स्नानान्ते शुद्धोदक स्नानं समर्पयामि।
**शुद्धोदक स्नानं –** ॐ शुद्धवालः सर्वशुद्धवालो मणिवालस्त आश्विनाः श्येतः श्येताक्षोऽरुणस्ते रुद्राय पशुपतये कर्णा यामा अवलिप्ता रौद्रा नभोरूपाः पार्जन्याः।। गङ्गे च यमुने चैव गोदावरी सरस्वती। नर्मदा सिन्धुकावेरी स्नानार्थं प्रतिगृह्यताम्।। ॐ भूर्भुवः स्वः ऋद्धि सिद्धि सहिताय श्री गणेशाम्बिके शुद्धोदक स्नानं समर्पयामि।

**शुद्धोदक स्नानान्ते - अभिषेकं कुर्यात् - निर्माल्यमुत्तरे विसृज्य - सर्वोपचारार्थे गन्धाक्षत पुष्पाणि समर्प्य - घण्टानादं कुर्य्यात् - श्री गणपति अथर्वशीर्ष** से अभिषेक करे, रजत वा ताम्रपात्र द्वारा एवं जलेन, पय वा पञ्चामृत (गन्धोदकेन) अभिषेक कार्यम्। "धारा पात्रं गंधादिभिः संपूज्य"

**श्रीगणपत्यथर्वशीर्षम् - ॐ भद्रङ्कर्णेभिरिति शान्तिः** हरि : ॐ ।। नमस्ते गणपतये। त्वमेव प्रत्यक्षं तत्त्वमसि। त्वमेव केवलं कर्तासि। त्वमेव केवलं धर्तासि। त्वमेव केवलं हर्तासि। त्वमेव सर्वं खल्विदं ब्रह्मासि। त्वं साक्षादात्मासि नित्यम्। ऋतं वच्मि। सत्यं वच्मि। अव त्वं माम्। अव वक्तारम्। अव श्रोतारम्। अव दातारम्। अव धातारम्। अवानूचानमव शिष्यम्। अव पश्चात्तात्। अव पुरस्तात्। अव चोत्तरात्तात्। अव दक्षिणात्तात्। अव चोर्ध्वात्तात्। अवाधरात्तात्। सर्वतो मां पाहि पाहि समन्तात्। त्वं वाङ्मयस्त्वं चिन्मयः। त्वमानन्दमयस्त्वं ब्रह्ममयः। त्वं सच्चिदानन्दाद्वितीयोऽसि। त्वं प्रत्यक्षं ब्रह्मासि। त्वं ज्ञानमयो विज्ञानमयोऽसि। सर्वं जगदिदं त्वत्तो जायते। सर्वं जगदिदं त्वत्तस्तिष्ठति। सर्वं जगदिदं त्वयि लयमेष्यति। सर्वं जगदिदं त्वयि प्रत्येत्ति। त्वं भूमिरापोऽनलोऽनिलो नभः। त्वं चत्वारि वाक्पदानि। त्वं गुणत्रयातीतः। त्वं कालत्रयातीतः। त्वं देहत्रयातीतः। त्वं मूलाधारस्थितोऽसि नित्यम्। त्वं शक्तित्रयात्मकः। त्वां योगिनो ध्यायन्ति नित्यम्। त्वं ब्रह्मा त्वं विष्णुस्त्वंरुद्रस्त्वमिन्द्रस्त्वमग्निस्त्वं वायुस्त्वं सूर्यस्त्वं चन्द्रमास्त्वं ब्रह्म भूर्भुवः स्वरोम्। गणादिं पूर्वमुच्चार्यं वर्णादिं तदनन्तरम्। अनुस्वारः परतरः। अर्धेन्दुलसितम्।।१।। तारेण रुद्धम्। एतत्तव मनुस्वरूपम्। गकारः पूर्वरूपम्। अकारो मध्यमरूपम्। अनुस्वारश्चान्त्यरूपम्। बिन्दुरुत्तररूपम्। नादः सन्धानम्। संहिता सन्धिः। सैषा गणेशविद्या। गणक ऋषिः निचृद्गायत्री छन्दः। श्रीमहागणपतिर्देवता। ॐ गं (गणपतये नमः।) एकदन्ताय विद्महे वक्रतुण्डाय धीमहि। तन्नो दन्ती प्रचोदयात्।। एकदन्तं चतुर्हस्तं पाशमङ्कुशधारिणम्। अभयं वरदं हस्तैर्बिभ्राणं मूषकध्वजम्।। रक्तं लम्बोदरं शूर्पकर्णकं रक्तवाससम्। रक्तगन्धानुलिप्ताङ्गं रक्तपुष्पैः सुपूजितम्।। भक्तानुकम्पिनं देवं जगत्कारणमच्युतम्। आविर्भूतं च सृष्ट्यादौ प्रकृतेः पुरुषात्परम्।। एवं ध्यायति यो नित्यं स योगी योगिनां वरः। नमो व्रातपतये नमो गणपतये नमः प्रमथपतये नमस्तेऽस्तु लम्बोदरायैकदन्ताय विघ्नविनाशिने शिवसुताय श्रीवरदमूर्तये नमो नमः।

**फलश्रुति -** एतदथर्वशीर्ष योऽधीते सब्रह्मभूयाय कल्पते। स सर्वविघ्नैर्न बाध्यते। स सर्वतः सुखमेधते। स पञ्चमहापातकोपपातकात् प्रमुच्यते। सायमधीयानो दिवसकृतं पापं नाशयति। प्रातरधीयानो रात्रिकृतं पापं नाशयति। सायं प्रातः प्रयुञ्जानोऽपापो भवति। धर्मार्थकाममोक्षं च विन्दति। इदमथर्वशीर्षमशिष्याय न देयम्। यो यदि मोहाद्दास्यति स

पापीयान् भवति। सहस्रावर्तनाद्यं यं काममधीते तं तमनेन साधयेत्। अनेन गणपतिमभिषिञ्चति स वाग्मी भवति। चतुर्थ्यामनश्नञ्जपति स विद्यावान् भवति। इत्यथर्वणवाक्यम्। ब्रह्माद्याचरणं विद्यात्। न बिभेति कदाचनेति। यो दूर्वाङ्कुरैर्यजति स वैश्रवणोपमो भवति। यो लाजैर्यजति स यशोवान् भवति। स मेधावान् भवति। यो मोदकसहस्रेण यजति स वाञ्छितफलमवाप्नोति। यः साज्यसमिद्भिर्यजति स सर्वं लभते स सर्वं लभते। अष्टौ ब्राह्मणान् सम्यग्ग्राहयित्वा सूर्यवर्चस्वी भवति। सूर्यग्रहे महानद्यां प्रतिमासंनिधौ वा जप्त्वा सिद्धमन्त्रो भवति। महाविघ्नात् प्रमुच्यते। महापापात् प्रमुच्यते। महादोषात् प्रमुच्यते। स सर्वविद्भवति। स सर्वविद्भवति। य एवं वेद।। ॐ भद्रङ्कर्णेभिरिति शान्तिः।।

**अमृताभिषेकोऽस्तु** - अस्तु अभृताभिषेकः नैत्रोदक स्पर्शः चरणोदकं धृत्वा देवं वस्त्रं प्रमृज्य आसनोपरि (स्वस्थाने वा) संस्थाप्य।

**वस्त्रं** - ॐ युवा सुवासाः परिवीत आगात् स उ श्रेयान् भवति जायमानः। तं धीरासः कवय उन्नयन्ति स्वाध्यो३ मनसा देवयन्तः।। ॐ तस्माद्यज्ञात्सर्वहुतऽऋचः सामानि जज्ञिरे। छन्दा ठं॰ सि जज्ञिरे तस्म्माद्यजुस्तस्मादजायत।। ॐ सर्वाभूषाधिके सौम्ये लोकलज्जानिवारणे। मयोपपादिते तुभ्यँ वाससी प्रतिगृह्यताम्।। ॐ भूर्भुवः स्वः ऋद्धि सिद्धि सहिताय श्री गणेशाम्बिके वस्त्रं समर्पयामि। वस्त्रान्ते आचमनीयं - जलं समर्पयामि

**उपवस्त्रं** - ॐ सुजातो ज्योतिषा सह शर्म वरूथमाऽसदत्स्वः। वासो अग्ने विश्वरूप ठं॰ सं व्ययस्व विभावसो।। ॐ वसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्रधारम्। देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुप्वा-कामधुक्षः।। यस्याभावेन शास्त्रोक्तं कर्म किञ्चिन्न सिद्ध्यति। उपवस्त्रं प्रयच्छामि सर्वकर्मोपकारकम्।। ॐ भूर्भूवः स्वः ऋद्धि सिद्धि सहिताय श्री गणेशाम्बिके उपवस्त्रं समर्पयामि। उपवस्त्रान्ते आचमनीयं जलं समर्पयामि।

**यज्ञोपवीतं** - ॐ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात्। आयुष्यमग्रयं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः।। ॐ तस्मादश्वा अजायन्त ये के चोभयादतः। गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः।। ॐ नवभिस्तन्तुभिर्युक्तं त्रिगुणं देवतामयम् उपवीतं मया दत्तं गृहाण परमेश्वर। ॐ भूर्भुवः स्वः ऋद्धि सिद्धि सहिताय श्री गणेशाम्बिके नमः उपवीतं समर्पयामि। उपवीतान्ते आचमीय जलं समर्पयामि।

**गन्धं** - ॐ गन्धर्वस्त्वा विश्वावसुः परिधातु विश्वस्या रिष्टयै यजमानस्य परिधिरस्य-ग्निरिडऽईडितः।। ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टांकरीषिणीम्। ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम्।। ॐ कुङ्कुमं कामना दिव्यं कामना काम सम्भवम्। कङ्कुमेनार्चितो देवमतः शान्ति प्रयच्छ मे।। ॐ भूर्भुवः स्वः ऋद्धि सिद्धि सहिताय श्री गणेशाम्बिके गन्धं समर्पयामि। ''कनिष्ठा मूलगताङ्गुष्ठयोगेन गन्ध मुद्रां प्रदर्श्य।''

**चंदनं -** ॐ त्वां गन्धर्वाऽअखनंस्त्वामिन्द्रस्त्वां बृहस्पतिः। त्वामोषधे सोमो राजाविद्वान् यक्ष्मादमुच्यतः।। ॐ श्रीखण्डं चन्दनं दिव्यं गन्धाढ्यं सुमनोहरम्। विलेपनं सुरश्रेष्ठ! चन्दनं प्रतिगृह्यताम्।। ॐ भूर्भुवः स्वः ऋद्धि सिद्धि सहिताय श्री गणेशाम्बिके नमः चन्दनं समर्पयामि।

**अक्षतं -** ॐ अक्षन्नमीमदन्त ह्यव प्रिया अधूषत। अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजान्विन्द्र ते हरी।। अक्षताश्च सुरश्रेष्ठ कुङ्कुमाक्ताः सुशोभिताः। मया निवेदिता भक्त्या गृहाण परमेश्वर। ॐ भूर्भुवः स्वः ऋद्धि सिद्धि सहिताय श्री गणेशाम्बिके नमः अक्षतान् समर्पयामि।

**पुष्पं व पुष्पमालां -** ॐ श्रीश्चते लक्ष्मीश्च पत्न्या वहोरात्रे पार्श्वे नक्षत्राणि रुपमश्विनौव्यातम्। इष्षन्निषाण मुम्मऽइषाण सर्वलोकम्मऽइषाण।। ॐ ओषधीः प्रति मोदध्वं पुष्पवतीः प्रसूवरीः। अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः।।
माल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो। मयाहृतानि पुष्पाणि पूजार्थं प्रतिगृह्यताम्।। ॐ भूर्भूवः स्वः ऋद्धि सिद्धि सहिताय श्री गणेशाम्बिके नमः पुष्पं व पुष्पमालां समर्पयामि।

**दूर्वाअङ्कुरं** – ॐ काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि। एवा नो दूर्वे प्र तनु सहस्रेण शतेन च।। दूर्वाङ्कुरान् सुहरितानमृतान् मङ्गलप्रदान। आनीतांस्तव पूजार्थं गृहाण गणनायक। ॐ भूर्भुवः स्वः ऋद्धि सिद्धि सहिताय श्री गणेशाम्बिके नमः दूर्वाअङ्कुरं समर्पयामि।

**बिल्वपत्रं –** ॐ नमो बिल्मिने च कवचिने च नमो व्वर्मिणे च वरूथिने च नमः। श्रुताय च श्रुतसेनाय च नमो दुन्दुव्भ्याय चाहनन्याय च नमो धृष्णवे। त्रिशाखैर्बिल्वपत्रैश्च अछिद्रैः कोमलैः शुभै। तव पूजां करिष्यामि गृहाण परमेश्वर।। ॐ भूर्भुवः स्वः ऋद्धि सिद्धि सहिताय श्री गणेशाम्बिके बिल्वपत्रं समर्पयामि।

**अबीरं गुलालं ( सौभाग्य द्रव्याणि ) -** ॐ अहिरिव भोगैः पर्येति बाहुं ज्याया हेतिं परिबाधमानः। हस्तघ्नो विश्वा वयुनानि विद्वान् पुमान् पुमा ठं॰ सं परि पातु विश्वतः।। अबीरं च गुलालं च हरिद्रादिसमन्वितम्। नाना परिमलं द्रव्यं गृहाण परमेश्वर।। ॐ भूर्भुवः स्वः ऋद्धि सिद्धि सहिताय श्री गणेशाम्बिके सौभाग्य द्रव्यं समर्पयामि।

**सिन्दूरं -** ॐ सिन्धोरिव प्राध्वने शूघनासो वातप्रमियः पतयन्ति यह्वाः। घृतस्य धारा अरुषो न वाजी काष्ठा भिन्दन्नूर्मिभिः पिन्वमानः।। सिन्दूरं शोभनं रक्तं सौभाग्यं सुखवर्धनम्। शुभदं कामदं चैव सिन्दूरं प्रतिगृह्यताम्।। ॐ भूर्भुवः स्वः ऋद्धि सिद्धि सहिताय श्री गणेशाम्बिके सिन्दूरं समर्पयामि।

**सुगन्धित द्रव्यं ( इत्र ) -** ॐ त्र्यम्बकं य्यजामहे सुगन्धिम्पुष्टि वर्धनम्। उर्वारुकमिव बन्धानान्मृत्योर्म्मुक्षीय मामृतात्।। ॐ भूर्भुवः स्वः ऋद्धि सिद्धि सहिताय श्री गणेशाम्बिके नमः सुगन्धित द्रव्यं समर्पयामि।

**अथ अंग पूजा –** ''गन्ध अक्षत पुष्प लेकर पूजा करें''
ॐ ह्रीं गणपतयेनमः पादौपूजयामि, ॐ ह्रीं हेरम्बाय नमः जानुनीं पूजयामि ॐ ह्रीं वक्रतुण्डायनमः जंघौपूजयामि ॐ ह्रीं एकदन्ताय नमः कटीं पूजयामि, ॐ ह्रीं उमापुत्रायै नमः नाभिं पूजयामि, ॐ ह्रीं शिवसुतायै नमः उदरंपूजयामि, ॐ ह्रीं गणनाथाय नमः स्तनौ पूजयामि, ॐ ह्रीं गजवक्त्राय नमः हृदयं पूजयामि, ॐ ह्रीं विघ्न हर्त्रे नमः कण्ठं पूजयामि, ॐ ह्रीं लम्बोदराय नमः स्कन्धौ पूजयामि, ॐ ह्रीं विघ्नेश्वराय नमः मुखं पूजयामि, ॐ ह्रीं भालचन्द्राय नमः – भालं (ललाटं) पूजयामि, ॐ ह्रीं संकटनाशनाय नमः शिरंः पूजयामि, ॐ ह्रीं सुमुखाय नमः सर्वाङ्गे पूजयामि। ''इति अंग पूजनम्''
**धूपं –** ॐ धूरसि धूर्व धूर्वन्तं धूर्व तं योऽस्मान् धूर्वति तं धूर्व यं वयं धूर्वामः। देवानामसि वह्नितम ठ॰ सस्नितमं पप्रितमं जुष्टतमं देवहूतमम्।।
वनस्पतिरसोद्भूतो गन्धाढ्यो गन्ध उत्तमः। आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम्।। ॐ भूर्भुवः स्वः ऋद्धि सिद्धि सहिताय श्री गणेशाम्बिके नमः धूपं समर्पयामि।
**दीपं –** ॐ अग्निज्ज्योतिषाज्ज्योतिष्म्मानृक्मोवर्च्चसाव्वर्च्चस्वान्। सहस्त्रदाऽअसि सहस्त्रायत्त्वा। ॐ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा। अग्निर्वर्च्चो ज्योतिर्वर्च्चः स्वाहा सूर्यो वर्च्चो ज्योतिर्वर्च्चः स्वाहा।। ज्योतिः सूर्यः सूर्यो ज्योतिः स्वाहा।। ॐ दीपो ज्योति परं ब्रह्म दीपो ज्योतिर्जनार्दनः। दीपो हरतु मे पापं दीप ज्योतिर्नमोस्तुते।। ''हस्तप्रक्षाल्य'' ॐ भूर्भुवः स्वः ऋद्धि सिद्धि सहिताय श्री गणेशाम्बिके नमः दीपं दर्शयामि।
**नैवेद्यं अर्पण करें –** (देवस्याग्रे – जलेन चतुष्कोण मण्डलं कृत्वा तस्योपरि नैवेद्य पात्रं निधाय) ॐ नाभ्या आसीदन्तरिक्ष ठ॰ शीर्ष्णो द्यौः समवर्तत। पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ२ अकल्पयन्।। ॐ अन्नपतेन्नस्यनो देह्यनमीवस्य शुष्मिणः। प्रप्प्रदातारन्तारिषऽऊर्ज्जन्नो धेहिद्विपदे चतुष्पदे।। ॐ अन्नं चतुर्विधं स्वादु रसै खड्भि समन्वितम्। भक्ष्य भोज्य समायुक्तं नैवेद्यं प्रतिगृह्यताम्।। धेनुमुद्रया अमृतीकृत्य ग्रासमुद्रया प्रदर्श्य ॐ अमृतोपस्तरणमसि स्वाहा। ॐ प्राणाय स्वाहा। ॐ अपानाय स्वाहा। ॐ समानाय स्वाहा। ॐ उदानाय स्वाहा। ॐ व्यानाय स्वाहा। ॐ अमृतापिधानमसि स्वाहा। ॐ भूर्भुवः स्वः ऋद्धि सिद्धि सहिताय श्री गणेशाम्बिके नमः नैवेद्यं समर्पयामि। (निवेदयामि)– नैवेद्यान्ते आचमनीयं जलं समर्पयामि उतरापोशनं समर्पयामि – जलं समर्पयामि ''करोद्वर्तनार्थे गन्धं चन्दनं अनुलेपनं समर्पयामि'' ॐ अ ठ॰ शुना ते अ ठ॰ शुः पृच्यतां परुषा परुः। गन्धस्ते सोममवतु मदाय रसो अच्युतः।। चन्दनं मलयोद्भूतं कस्तूर्यादिसमन्वितम्। करोद्वर्तनकं देव गृहाण परमेश्वर।। ॐ भूर्भुवः स्वः ऋद्धि सिद्धि सहिताय श्री गणेशाम्बिके नमः करोद्वनार्थे गन्धानुलेपनं समर्पयामि।
**मुख-वासार्थे ताम्बूलं –** ॐ यत्पुरुषेण हविषा देवा यज्ञमतन्वत। वसन्तोऽस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः।।

पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतम्। एलादिचूर्णसंयुक्तं ताम्बूलं प्रतिगृह्यताम्।।
ॐ भूर्भुवः स्वः ऋद्धि सिद्धि सहिताय श्री गणेशाम्बिके नमः मुख वासार्थे ताम्बुलं समर्पयामि।
**ऋतुफलं –** ॐ याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः। बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्व ठं॰ हसः।।
इदं फलं मया देव स्थापितं पुरतस्तव। तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि।।
ॐ भूर्भुवः स्वः ऋद्धि सिद्धि सहिताय श्री गणेशाम्बिके नमः अखण्ड ऋतुफलं समर्पयामि।
**दक्षिणां** (द्रव्यं) – ॐ यद्दत्तं य्यत्परादानं य्यत्पूर्तय्याँश्च दक्षिणाः। तदग्नि वैश्वकर्मणः स्वर्देवेषुनोदधत्।। ॐ हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्। स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम।।
हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः। अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे।।
ॐ भूर्भुवः स्वः ऋद्धि सिद्धि सहिताय श्री गणेशाम्बिके नमः साद्गुण्यार्थे द्रव्यं दक्षिणां समर्पयामि।
**कर्पूर नीराजनं ( आरती ) –** ॐ इद ठं॰ हविः प्रजननं मे अस्तु दशवीर ठं॰ सर्वगण ठं॰ स्वस्तये।। आत्मसनि प्रजासनि पशुसनि लोकसन्यभयसनि।। अग्निः प्रजां बहुलां मे करोत्वन्नं पयो रेतो अस्मासु धत्त।।
ॐ आ रात्रि पार्थिव ठं॰ रजः पितुरप्रायि धामभिः। दिवः सदा ठं॰ सि बृहती वि तिष्ठस आ त्वेषं वर्तते तमः।। कदलीगर्भसम्भूतं कर्पूरं तु प्रदीपितम्। आरार्तिकमहं कुर्वे पश्य मे वरदो भव।।
**अञ्जलौ पुष्पाण्यादाय – मन्त्रपुष्पाञ्जलिं –** ॐ यज्ञेन यज्ञमयजन्त देवास्तानि धर्म्माणि प्रथमान्यासन्। तेह नाकम्महिमानः सचन्त यत्र पूर्वेसाद्धयाः सन्तिदेवाः।। नाना सुगन्धि पुष्पाणि यथा कालोद् भवानि चः। पुष्पाजलिर्मया दत्त – गृहाण गणेश्वरः (परमेश्वर)।।
एकदन्ताय विद्महे वक्रतुण्डाय धीमहि। तन्नोदन्ती प्रचोदयात्।। ॐ भूर्भुवः स्वः ऋद्धि सिद्धि सहिताय श्री गणेशाम्बिकाभ्याम् नमः मन्त्र पुष्पाञ्जलिं समर्पयामि।
**प्रदक्षिणां –** सप्तास्यासन्परिधयस्त्रिःसप्तसमिध÷कृताः।। देवायद्यज्ञन्त न्वानाऽ-अबध्नन्पुरुषम्पशुम्।। यानि कानि च पापानि जन्मान्तरकृतानि च।। तानि सर्वाणि नश्यन्तु प्रदक्षिणपदे पदे।। ॐ भूर्भुवः स्वः ऋद्धि सिद्धि सहिताय श्री गणेशाम्बिके नमः प्रदक्षिणां समर्पयामि (तीन प्रदक्षिणा करे)।
**विशेषार्घ्यं –** ताम्र वा रजतादिपात्रे – जल गन्ध अक्षत पुष्प दूर्वा रक्तचन्दन कूशा दधि दुग्ध दक्षिणा फल नारिकेलं च धृत्वा।।
**मन्त्रः –** रक्ष रक्ष गणाध्यक्ष रक्ष त्रैलोक्यरक्षक। भक्तानामभयं कर्ता त्राता भव भवार्णवात्।।
द्वैमातुर कृपासिन्धो षाण्मातुराग्रज प्रभो। वरदस्त्वं वरं देहि वाञ्छितं वाञ्छितार्थद।। अनेन सफलार्घ्येण वरदोऽस्तु सदा मम।

**प्रार्थना -** विघ्नेश्वराय वरदाय सुरप्रियाय लम्बोदराय सकलाय जगद्धिताय। नागाननाय श्रुतियज्ञविभूषिताय गौरीसुताय गणनाथ नमो नमस्ते।। भक्तार्तिनाशनपराय गणेश्वराय सर्वेश्वराय शुभदाय सुरेश्वराय। विद्याधराय विकटाय च वामनाय भक्तप्रसन्नवरदाय नमो नमस्ते।। लम्बोदरं परमसुन्दर मेकदन्तं रक्ताम्बरं (पिताम्बरं) त्रिनयनं परमं पवित्रम्। उद्यद्दिवाकर निभोज्ज्वलकान्तिकान्तं विघ्नेश्वरं सकल विघ्नहरं नमामि।। त्वं वैष्णवी शक्तिरनन्तवीर्या विश्वस्य बीजं परमासि माया। सम्मोहितं देवि समस्तमेतत् त्वं वै प्रसन्ना भुवि मुक्तिहेतुः।। लम्बोदरं नमस्तुभ्यं सततं मोदकं प्रियम्। निर्विघ्नं कुरुमे देव सर्वकार्येषु सर्वदा।। रुपं देहि जयं देहि सौभाग्यं देहि देवि (देव) मे। पुत्रान् देहि धनं देहि सर्वान् कामाश्च देहि मे।। गणेश पूजने कर्म यन्न्यूनमधिकं कृतम्। तेन सर्वेण सर्वात्मा प्रसन्नोऽस्तु सदा मम। अनया पूजया ऋद्धि सिद्धि सहिताय श्री गणेशाम्बिके साङ्गं सपरिवारं सहितं प्रीयतां न मम।। श्री विघ्न राज प्रसादात्कर्तव्य अमुक कर्मण (याग) निर्विघ्न समाप्तिश्चास्तु।। "अस्तु परिपूर्णम्"

पूजा के समय स्तोत्र का पाठ करना भी परमलाभदायक होता है।
(स्तोत्रं देवी रसाप्रोक्ता) (स्तोत्रंकस्य न तुष्टये)
स्तोत्र भगवती वाग्देवी की जिह्वा है।

**श्री गणपति स्तोत्र -** सुवर्ण-वर्ण-सुन्दरं सितैकदन्तबन्धुरं गृहीतपाशमंकुशं वरप्रदाभयप्रदम्। चतुर्भुजं त्रिलोचनं भुजङ्गमोपवीतिनं प्रफुल्लवारिजासनं भजामि सिन्दुराननम्।। किरीटहारकुण्डलं प्रदीप्तबाहुभूषणं प्रचण्डरत्नकङ्कणं प्रशोभिताङ्घ्रियष्टिकम्। प्रभातसूर्यसुन्दराम्बरद्वयप्रधारिणं सरत्नहेमनूपुरं प्रशोभिताङ्घ्रिपङ्कजम्।। सुवर्णदण्डमण्डितं प्रचण्डचारुचामरं गृहप्रदेन्दुसुन्दरं युगक्षणप्रमोदितम्। कवीन्द्रचित्तरञ्जकं महाविपत्ति भञ्जकं षडक्षरस्वरूपिणं भजेगजेन्द्ररूपिणम् विरिञ्चिविष्णुवन्दितं विरूपलोचनस्तुतं गिरीशदर्शनेच्छया समर्पितं पराम्बया। निरन्तरं सुरासुरः सपुत्रवामलोचनैः महाख्यअष्टकर्मसु स्मृतं भजामि तुन्दिलम्।। मदौघलुब्धचञ्चलालिमञ्जुगुञ्जितामुखं प्रबुद्धचित्तरञ्जकं प्रमोदकर्ण चालकम्। अनन्यभक्तिमानवं प्रचण्डमुक्तिदायकं नमामि नित्यमादरेण वक्रतुण्डनायकम्।। दारिद्र्यविद्रावणमाशु कामदं पठेदेतदजस्रमादरात्। पुत्रीकलत्रस्वजनेषु मैत्री पुमान् भवेदेकवरप्रसादात्।।

**स्तुति -** वं वं वं विघ्नराजं भजति निजभुजे दक्षिणे न्यस्त शूण्डं। क्रं क्रं क्रं क्रोध मुद्रादलित रिपुबल कल्पवृक्षस्यमूले। दं दं दं दन्तमेकं दधति मुनिमुखं काम धेन्वंनिषेयं। धं धं धं धारयन्तं धनदमति धिय सिद्धि बुद्धि द्वितीयम्।।

# अथकलश ( वरुण ) स्थापना पूजनम्

तत्रादौ अक्षतैरष्टदलं पद्मं कृत्वा तदुपरि ताम्र कलशं स्थापयेत्।
हाथ में गन्ध, अक्षत, पुष्प लेकर पृथ्वी का स्पर्श करें।

**भूमि स्पर्श –** ॐ भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री। पृथिवीं यच्छ पृथिवीं दृ ठ॰ ह पृथिवीं मा हि ठ॰ सीः।।

**धान्य प्रक्षेपः –** ॐ धान्यमसि धिनुहि देवान् प्राणाय त्वो दानाय त्वा व्यानाय त्वा। दीर्घामनु प्रसितिमायुषे धां देवो वः सविता हिरण्यपाणिः प्रति गृभ्णात्वच्छिद्रेण पाणिना चक्षुषे त्वा महीनां पयोऽसि।।

**कलश स्थापनम् –** ॐ आ जिघ्र कलशं मह्या त्वा विशन्त्विन्दवः। पुनरूर्जा नि वर्तस्व सा नः सहस्रं धुक्ष्वोरुधारा पयस्वती पुनर्मा विशताद्रयिः।।

**कलशे जलं पूरयेत् –** ॐ वरुणस्योत्तम्भनमसि वरुणस्य स्कम्भसर्जनी स्थो वरुणस्य ऋतसदन्यसि वरुणस्य ऋतसदनमसि वरुणस्य ऋतसदनमासीद।

**गन्ध प्रक्षेपः –** ॐ त्वां गन्धर्वा अखनँस्त्वामिन्द्रस्त्वां बृहस्पतिः। त्वामोषधे सोमो राजा विद्वान् यक्ष्मादमुच्यत।।

**सर्वोषधी प्रक्षेपः –** ॐ या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा। मनै नु बभ्रूणामह ठ॰ शतं धामानि सप्त च।।

**दूर्वाङ्कुरान् प्रक्षेपः –** ॐ काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि। एवा नो दूर्वे प्र तनु सहस्रेण शतेन च।।

**पञ्चपल्लव प्रक्षेपः –** ॐ अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता। गोभाज इत्किलासथ यत्सनवथ पूरुषम्।।

**पवित्री प्रक्षेपः –** ॐ पवित्रे स्थो वैष्णव्यौ सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः। तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुनेतच्छकेयम्।।

**सप्तमृत्तिका प्रक्षेपः –** ॐ स्योना पृथिवि नो भवानृक्षरा निवेशनी। यच्छा नः शर्म सप्रथाः।

**पूगीफल प्रक्षेपणः –** ॐ याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः। बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्व ठ॰ हसः।।

**पञ्चरत्न प्रक्षेपः –** ॐ परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत्। दधद्रत्नानि दाशुषे।

**( हिरण्य ) द्रव्य प्रक्षेपः –** ॐ हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्। सदाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम।।

**कलशस्य कण्ठे रक्त सूत्रं स्पर्शयेत -** ॐ सुजातो ज्योतिषा सह शर्म वरूथमाऽसदत्स्वः। वासो अग्ने विश्वरूप ठ॰ सं व्ययस्व विभावसो।।

**पूर्ण पात्रं -** ॐ पूर्णा दर्वि परा पत सुपूर्णा पुनरा पत। वस्नेव विक्रीणावहा इषमूर्ज ठ॰ शतक्रतो।।

**नारिकेल फलं स्थापनं -** ॐ श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनो व्यात्तम्। इष्णन्निषाणामुं म इषाण सर्वलोकं म इषाण।।

(यजमान सम्मुखे संस्थापयेत्)

**हस्ते गन्धाक्षतपुष्पाण्यादाय वरुणं आवाहयेत् -** (कलश में वरुण का ध्यान और आवाहन) ॐ तत्त्वा यामि ब्रह्मणा वन्दमानस्तदा शास्ते यजमानो हविर्भिः। अहेडमानो वरुणेह बोध्युरुश ठ॰ स मा न आयुः प्र मोषीः।। अस्मिन् कलशे वरुणं साङ्गं सपरिवारं सायुधं सशक्तिकमावाहयामि।।

**कलशे अन्य देवतानां आवाहनम् -** कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः। मूले त्वस्य स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः।। कुक्षौ तु सागराः सर्वे सप्तद्वीपा वसुन्धरा। ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः।। अङ्गैश्च सहिताः सर्वे कलशं तु समाश्रिताः।। अत्र गायत्री सावित्री शान्तिः पुष्टिकरी तथा।। आयान्तु देवपूजार्थं दुरितक्षयकारकाः। गङ्गे च यमुने चैव गोदावरि सरस्वति। नर्मदे सिन्धुकावेरि जलेऽस्मिन् संनिधिं कुरु।। सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः। आयान्तु मम शान्त्यर्थं दुरितक्षयकारकाः।।

**अक्षतान्यादाय वरुणं प्रतिष्ठापयेत - (प्रतिष्ठा) -** ॐ मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञ ठ॰ समिमं दधातु। विश्वे देवास इह मादयन्तामो३म्प्रतिष्ठ।। कलशे वरुणाद्यावाहितदेवताः सुप्रतिष्ठिता वरदा भवन्तु। ॐ वरुणाद्यावाहितदेवताभ्यो नमः। ततो "ॐ भूर्भूवः स्व वरुणाद्यावाहित देवताभ्यो नमः" इति नाममन्त्रेण षोडशोपचारैः सम्पूज्य।

**रूद्र सूक्तेन वा प्रपूजयेत् -** पश्चात् पुष्पाक्षतान् ग्रहीत्वा ध्यायेत् ॐ देवदानवसंवादे मध्यमाने महोदधौ। उत्पन्नोऽसि तदा कुम्भ विधृतो विष्णुना स्वयम्।। त्वतोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः। त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः।। शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः। आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः।। त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदाः। त्वत्प्रसादादिमां पूजां कर्तुमीहे जलोद्भव। सांनिध्यं कुरु मे देव प्रसन्नो भव सर्वदा।। नमो नमस्ते स्फटिकप्रभाय सुश्वेतहाराय सुमङ्गलाय। सुपाशहस्ताय झषासनाय जलाधिनाथाय नमो नमस्ते।। "ॐ अपां पतये वरुणाय नमः।"

कृतेन अनेन पूजनेन कलशे वरुणाद्यावाहितदेवताः प्रीयन्तां न मम।

# अथ - पुण्याहवाचनम्

पुण्याहवाचन के लिए कलश की पूजा करें तत्पश्चात् प्रार्थना करें-

ॐ पाशपाणे नमस्तुभ्यं पद्मिनीजीवनायक। पुण्याहवाचनं यावत् तावत् त्वं सुस्थिरो भव।।

।।ततः स्वस्तिवाचनार्थाय युग्मविप्रान्संपूज्य।। अवनिकृत जानुमण्डलः कमल-मुकुल सदृशमञ्जलिं शिरस्याधाय दक्षिणेन पाणिना स्वर्णपूर्णकलशं धारयित्वा वदेत्-ॐ त्रीणिपदाविचक्रमेव्विष्णुर्ग्गोपाऽअदाभ्यः।। अतोधर्म्माणिधारयेन्।। दीर्घा नागा नद्यो गिरयस्त्रीणि विष्णुपदानि च।। तेनायुः प्रमाणेनः पुण्यं पुण्याहं दीर्घमायुरस्त्विति भवन्तो ब्रुवन्तु।। विप्रावदेयुः पुण्यं पुण्याहं दीर्घमायुरस्तु।। एवं वारत्रयं कृत्वा कलशं भूमौ धान्यराशौ संस्थाप्य।।

यजमान : ॐ अपां मध्ये स्थिता देवाः सर्वमप्सु प्रतिष्ठितम्। ब्राह्मणानां करे न्यस्ताः शिवा आपो भवन्तु नः।। शिवा आपः सन्तु इति जलं दद्यात्

विप्राः : सन्तु शिवा आपः।

यजमान : लक्ष्मीर्वसति पुष्पेषु लक्ष्मीर्वसति पुष्करे।
सा मे वसतु वै नित्यं सौमनस्यं सदास्तु मे।। सौमनस्यमस्तु।

विप्राः : 'अस्तु सौमनस्यम्'

यजमान : अक्षतं चास्तु मे पुण्यं दीर्घमायुर्यशोबलम्। यद्यच्छ्रेयस्करं लोके तत्तदस्तु सदा मम।। अक्षतं चारिष्टं चास्तु।

विप्राः : 'अस्त्वक्षतमरिष्टं च'।

यजमान : (चन्दन) गन्धाः पान्तु।

विप्राः : सौमङ्गल्यं चास्तु।

यजमान : (अक्षत) अक्षताः पान्तु।

विप्राः : आयुष्यमस्तु।

यजमान : (पुष्प) पुष्पाणि पान्तु।

विप्राः : सौश्रियमस्तु।

यजमान : (सुपारी-पान) सफलताम्बूलानि पान्तु।

विप्राः : ऐश्वर्यमस्तु।

यजमान : (दक्षिणा) दक्षिणाः पान्तु।

विप्राः : बहुदेयं चास्तु। (बहुधनं चास्तु)

यजमान : (जल) आपः पान्तु।

विप्राः : स्वर्चितमस्तु।

यजमान : (हाथ जोड़कर) दीर्घमायुः शान्तिः पुष्टिस्तुष्टिः श्रीर्यशो विद्या विनयो वित्तं बहुपुत्रं बहुधनं चायुष्यं चास्तु।

विप्राः : 'तथास्तु' (ऐसा कहकर ब्राह्मण यजमान के सिर पर कलश का जल छिड़ककर निम्नलिखित वचन बोलकर आशीर्वाद दें-)
ॐ दीर्घमायुः शान्तिः पुष्टिस्तुष्टिश्चास्तु।

यजमान : (अक्षत लेकर) यं कृत्वा सर्ववेदयज्ञक्रियाकरण कर्मारम्भाः शुभाः शोभनाः प्रवर्तन्ते, तमहमोङ्कारमादिं कृत्वा यजुराशीर्वचनं बहुऋषिमतं समनुज्ञातं भवद्भिरनुज्ञातः पुण्यं पुण्याहं वाचयिष्ये।

विप्राः : 'वाच्यताम्' (ऐसा कहकर निम्न मन्त्रों का पाठ करें -)
ॐ द्रविणोदाः पिपीषति जुहोत प्र च तिष्ठत। नेष्ट्रादृतुभिरिष्यत।।
सविता त्वा सवाना ठ॰ सुवतामग्निर्गृहपतीना ठ॰ सोमो वनस्पतीनाम्।
बृहस्पतिर्वाच इन्द्रो ज्यैष्ठ्याय रुद्रः पशुभ्यो मित्रः सत्यो वरुणो धर्मपतीनाम्।
ॐ भद्रङ्कर्णेभिः॰ –
न तद्रक्षा ठ॰ सि न पिशाचास्तरन्ति देवानामोजः प्रथमज ठ॰ ह्येतत्।
यो बिभर्ति दाक्षायण ठ॰ हिरण्य ठ॰ स देवेषु कृणुते दीर्घमायुः स मनुष्येषु कृणुते दीर्घमायुः।
उच्चा ते जातमन्धसो दिवि सद्भूम्या ददे। उग्र ठ॰ शर्म महि श्रवः।।
उपास्मै गायता नरः पवमानायेन्दवे। अभि देवाँ२ इयक्षते।

यजमान : व्रतजपनियमतपः स्वाध्यायक्रतुशमदमदयादानविशिष्टाना सर्वेषां ब्राह्मणानां मनः समाधीयताम्।

विप्राः : समाहितमनसः स्मः।

यजमान : प्रसीदन्तु भवन्तः।

विप्राः : प्रसन्नाः स्मः। (इसके बाद यजमान पहले से रखे गये दो सकोरों में से पहले सकोरे में आम के पल्लव या दूर्वा से थोड़ा-थोड़ा जल कलश से डाले और ब्राह्मण बोलते जायँ-(जल वा अक्षत छोड़ने का विधान है।) अस्तु

**पहले पात्र ( सकोरे ) में :** ॐ शान्तिरस्तु। ॐ पुष्टिरस्तु। ॐ तुष्टिरस्तु। ॐ वृद्धिरस्तु। ॐ अविघ्नमस्तु। ॐ आयुष्यमस्तु। ॐ आरोग्यमस्तु। ॐ शिवमस्तु। ॐ शिवं कर्मास्तु। ॐ कर्मसमृद्धिरस्तु। ॐ धर्मसमृद्धिरस्तु। ॐ वेदसमृद्धिरस्तु। ॐ शास्त्र-समृद्धिरस्तु। ॐ धनधान्यसमृद्धिरस्तु। ॐ पुत्रपौत्रसमृद्धिरस्तु। ॐ इष्टसम्पदस्तु।

**दूसरे पात्र ( सकोरे ) में** : ॐ अरिष्टनिरसनमस्तु। ॐ यत्पापं रोगोऽशुभमकल्याणं तद् दूरे प्रतिहतमस्तु।

**पुनः पहले पात्र में :** ॐ यच्छ्रेयस्तदस्तु। ॐ उत्तरे कर्मणि निर्विघ्नमस्तु। ॐ उत्तरोत्तरमहरहरभिवृद्धिरस्तु। ॐ उत्तरोत्तराः क्रियाः शुभाः शोभनाः सम्पद्यन्ताम्। ॐ तिथिकरणमुहूर्तनक्षत्रग्रहलग्नसम्पदस्तु। ॐ तिथिकरणमुहूर्तनक्षत्रग्रहलग्नाधिदेवताः प्रीयन्ताम्। ॐ तिथिकरणे समुहूर्ते सनक्षत्रे सग्रहे सलग्ने साधिदैवते प्रीयेताम्। ॐ दुर्गापाञ्चाल्यौ प्रीयेताम्। ॐ अग्निपुरोगा विश्वेदेवाः प्रीयन्ताम्। ॐ इन्द्रपुरोगा मरुद्गणाः प्रीयन्ताम्। ॐ वसिष्ठपुरोगा ऋषिगणाः प्रीयन्ताम्। ॐ माहेश्वरीपुरोगा उमामातरः प्रीयन्ताम्। ॐ अरुन्धतीपुरोगा एकपत्न्यः प्रीयन्ताम्। ॐ ब्रह्मपुरोगाः सर्वे वेदाः प्रीयन्ताम्। ॐ विष्णुपुरोगाः सर्वे देवाः प्रीयन्ताम्। ॐ ऋषयश्छन्दांस्याचार्या वेदा देवा यज्ञाश्च प्रीयन्ताम्। ॐ ब्रह्म च ब्राह्मणाश्च प्रीयन्ताम्। ॐ श्री सरस्वत्यौ प्रीयेताम्। ॐ श्रद्धामेधे प्रीयेताम्। ॐ भगवती कात्यायनी प्रीयताम्। ॐ भगवती माहेश्वरी प्रीयताम्। ॐ भगवती ऋद्धिकरी प्रीयताम्। ॐ भगवती वृद्धिकरी प्रीयताम्। ॐ भगवती पुष्टिकरी प्रीयताम्। ॐ भगवती तुष्टिकरी प्रीयताम्। ॐ भगवन्तौ विघ्नविनायकौ प्रीयेताम्। ॐ सर्वाः कुलदेवताः प्रीयन्ताम्। ॐ सर्वा ग्रामदेवताः प्रीयन्ताम्। ॐ सर्वा इष्टदेवताः प्रीयन्ताम्।

**दूसरे पात्र में :** ॐ हताश्च ब्रह्मद्विषः। ॐ हताश्च परिपन्थिनः। ॐ हताश्च कर्मणो विघ्नकर्तारः। ॐ शत्रवः पराभवं यान्तु। ॐ शाम्यन्तु घोराणि। ॐ शाम्यन्तु पापानि। ॐ शाम्यन्त्वीतयः। ॐ शाम्यन्तूपद्रवाः।।

**पहले पात्र में :** ॐ शुभानि वर्धन्ताम्। ॐ शिवा आपः सन्तु। ॐ शिवा ऋतवः सन्तु। ॐ शिवा ओषधयः सन्तु। ॐ शिवा वनस्पतयः सन्तु। ॐ शिवा अतिथयः सन्तु। ॐ शिवा अग्नयः सन्तु। ॐ शिवा आहुतयः सन्तु। ॐ अहोरात्रे शिवे स्याताम्। ॐ निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम्।। ॐ शुक्राङ्गारकबुधबृहस्पतिशनैश्चरराहुकेतु सोम सहिता आदित्यपुरोगाः सर्वे ग्रहाः प्रीयन्ताम्। ॐ भगवान् नारायणः प्रीयताम्। ॐ भगवान् पर्जन्यः प्रीयताम्। ॐ भगवान् स्वामी महासेनः प्रीयताम्। ॐ पुरोऽनुवाक्यया यत्पुण्यं तदस्तु। ॐ याज्यया यत्पुण्यं तदस्तु। ॐ वषट्कारेण यत्पुण्यं तदस्तु। ॐ प्रातः सूर्योदये यत्पुण्यं तदस्तु।

(यजमान हाथ जोड़कर ब्राह्मणों से प्रार्थना करे –)

यजमान : ॐ एतत्कल्याणयुक्तं पुण्यं पुण्याहं वाचयिष्ये।

विप्राः : वाच्यताम् –

"ततः पुनर्यजमानो ब्राह्मणान् सांजलिः प्रार्थयेत्"

यजमान : ब्राह्मं पुण्यं महद्यश्च्च सृष्टयुत्पादनकारम्। वेदवृक्षोद्भवं नित्यं तत्पुण्याहम् ब्रुवन्तु नः।। भो ब्राह्मणाः मह्यं सकुटुम्बिने महाजनान्नमस्कुर्वाणाय आशीर्वचनमपेक्षमाणाय मया क्रियमाणस्य अमुक याग कर्मणः पुण्याहं भवन्तो ब्रुवन्तु।। (इदं वाक्यं क्रमेणमन्द मध्यमोच्चस्वरेण त्रिः कर्ता वक्तव्यम्)

विप्राः : अस्तु पुण्याहम्। एवं त्रिः।।
ॐ पुनन्तुमादेवजनाः पुनन्तुमनसाधियः। पुनन्तु विश्वाभूतानि जातवेदः पुनीहि मा।।

यजमान : ॐ पृथिव्यामुद्धृतायान्तु यत्कल्याणं पुराकृतम्। ऋषिभिः सिद्ध गन्धर्वैस्तत्कल्याणं ब्रुवन्तु नः।। भो ब्राह्मणाः मह्यं सकुटुम्बिने महाजनान्नमस्कुर्वाणाय आशीर्वचनमपेक्षमाणाय मथा क्रियमाणस्य अमुक याग कर्मणः कल्याणं भवन्तो ब्रुवन्तु।।

विप्राः : ॐ अस्तु कल्याणम् (एवंत्रिः)
ॐ यथेमां वाचं कल्याणीमावदानि जनेभ्यः ब्रह्मराजन्याभ्या ठं॰ शूद्राय चार्याय च स्वाय चारणाय च। प्रियो देवानां दक्षिणायै दातुरिह भूया समय मे कामः समृद्धयतामुपमादो नमतु।।

यजमान : सागरस्य यथा वृद्धिर्महा लक्ष्म्यादिभिः कृता।
सम्पूर्णा सुप्रभावा च तां ऋद्धिं बुवन्तु नः।।
भो ब्राह्मणाः मह्यं सकुटुम्बिने महाजनान्नमस्कुर्वाणाय आशीर्वचनमपेक्षमाणाय मया क्रियमाणस्य अमुक याग कर्मणः ऋद्धिं भवन्तो बुवन्तु।।

विप्राः : ॐ कर्म ऋद्धयताम् "एवं त्रिः"
ॐ सत्रस्य ऋद्धिरस्यगन्म ज्योतिरमृता अभूम।
दिवं पृथिव्याऽअध्यारुहामाविदाम् देवान् स्वर्ज्योतिः।।

यजमान : स्वस्तिस्तुयाऽविनाशाख्या पुण्यकल्याण वृद्धिदा।
विनायक प्रिया नित्यं तां च स्वस्ति बुवन्तु नः।।
भो ब्राह्मणाः मह्यं सकुटुम्बिने महाजनान्नमस्कुर्वाणाय आशीर्वचनमपेक्षमाणाय मया क्रियमाणस्य अमुक याग कर्मणः स्वस्ति भवन्तो बुवन्तु।।

विप्राः : ॐ आयुष्मते स्वस्ति "एवंत्रिः"
ॐ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः।
स्वस्ति नस्ताक्ष्योऽअरिष्टनेमिः स्वस्तिनो बृहस्पतिर्दधातु।।

यजमान : समुद्रमथनाज्जाता जगदानन्दकारिका।
हरिप्रिया च माङ्गल्या तां श्रियञ्च ब्रुवन्तु नः।।
भो ब्राह्मणाः मह्यं सकुटुम्बिने महाजनान्नमस्कुर्वाणाय आशीर्वचनमपेक्षमाणाय मया क्रियमाणस्य अमुक याग कर्मणः श्री रस्तु इति भवन्तो ब्रुवन्तु।

विप्राः : 'ॐ अस्तु श्री "एवं त्रिः"
ॐ श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षणात्रि रुपमश्विनौ व्यातम्।
इष्णन्निषाणामुम्मइषाण सर्वलोकम्मइषाण।
ॐ मनसः काममाकूतिं त्वाचः सत्यमशीमहि।
पशुना ठ॰ रूप मन्नस्य मयि श्रीः श्रयतां यशः

यजमान : प्रजापति लोकपालो धाता ब्रह्मा च देवराट्।
भगवाञ्छाश्वतो नित्यं स नो रक्षतु सर्वतः।।

विप्राः : भगवान प्रजापति प्रीयताम्।।

ततो यजमान साक्षत् जलं गृहीत्वा

यजमान : ॐ कृतैतद् आस्मिन् दान खण्डोक्त पुण्याहवाचने न्यूनातिरिक्तो यो विधिः सः उपविष्ट ब्राह्मणानां वचनात् श्री महागणपति प्रसादात् सर्वः परिपूर्णताऽस्तु।
इति उक्त्वा जलं क्षिपेत्।

विप्राः : ॐ परिपूर्णताऽस्तु वा अस्तु परिपूर्णं

तत्पश्चात् कलश तथा प्रथम पात्र के जल से दूर्वा आम्रपल्लवों से यजमान का सपरिवार अभिषेक करें। (अभिषेके विप्राः कर्तुर्वामतः - पत्नीमुवेश्य)

ध्यान दें - अभिषेक के समय यजमान पत्नी बायीं तरफ बैठायें तथा ब्राह्मण उत्तर की तरफ मुख करें।

**मन्त्र :** ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्। सरस्वत्यै वाचो यन्तुर्यन्त्रेणाग्नेः साम्राज्येनाभिषिञ्चामि।। *(शु.यं. १८/३७)*

ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्। अश्विनोर्भैषज्येन तेजसे ब्रह्मवर्चसायाभि षिञ्चामि सरस्वत्यै भैषज्येन वीर्यायान्नाद्यायाभि षिञ्चामीन्द्रस्येन्द्रियेण बलाय श्रियै यशसेऽभि षिञ्चामि।। *(शु.य. २०/३)*

ॐ विश्वानि देव सवितर्दुरितानि परा सुव। यद्भद्रं तन्न आ सुव।।

ॐ धामच्छदग्निरिन्द्रो ब्रह्मा देवो बृहस्पतिः।
सचेतसो विश्वे देवा यज्ञं प्रावन्तु नः शुभे।।

ॐ पयः पृथिव्यां पय ओषधीषु पयो दिव्यन्तरिक्षे पयो धाः। पयस्वतीः प्रदिशः सन्तु मह्यम्।।
ॐ पञ्च नद्यः सरस्वतीमपि यन्ति सस्रोतसः। सरस्वती तु पञ्चधा सो देशेऽभवत्सरित्।।
ॐ वरुणस्योत्तम्भनमसि वरुणस्य स्कम्भसर्जनी स्थो वरुणस्य ऋतसदन्यसि वरुणस्य ऋतसदनमसि वरुणस्य ऋतसदनमा सीद।।

ॐ पुनन्तु मा देवजनाः पुनन्तु मनसा धियः।
पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा।।

ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्। सरस्वत्यै वाचो यन्तुर्यन्त्रिये दधामि बृहस्पतेष्ट्वा साम्राज्येनाभिषिञ्चाम्यसौ। *(शु.यु. ९/३०)*
ॐ त्वं यविष्ठ दाशुषो नॄँः पाहि शृणुधी गिरः। रक्षा तोकमुत त्मना। *(शु.य. १८/७७)*
ॐ अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः। प्र प्रदातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे।।
ॐ द्यौः शान्तिरन्तरिक्ष ठं॰ शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः।
वनस्पतयः शान्तिर्विश्वे देवाः शान्तिर्ब्रह्म शान्तिः सर्व ठं॰ शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि।।
यतो यतः समीहसे ततो नो अभयं कुरु। शं नः कुरु प्रजाभ्योऽभयं नः पशुभ्यः।।

सुशान्तिर्भवतु।

सरितः सागराः शैलास्तीर्थानि जलदा नदाः। एते त्वामभिषिञ्चन्तु सर्वकामार्थसिद्धये।।
शान्तिः पुष्टिस्तुष्टिश्चास्तु।
ॐ सर्वेषांवा एष वेदाना ठं॰ रसोयत्साम सर्वेषामेवैतद् वेदाना ठं॰ रसेना भिषिञ्चति।
इत्यभिषिच्य ॐ अमृताभिषेकोऽस्तु ''शान्तिः३ सुशान्तिर्भवतु। सर्वारिष्ट शान्तिर्भवतु इति ब्रूयात्।
तत्पश्चात् यजमान सङ्कल्प करें -
हस्ते सङ्कल्पमादायः ॐ विष्णुर्विष्णु र्विष्णुः तत्सद् अद्य पूर्वोच्चारित ग्रह गुण गण विशेषण विशिष्टायां शुभ पुण्य तिथौ अमुक गोत्रोत्पन्नोहं अमुक नामाहं मम अद्य कृत एतत् याग कर्मणि पुण्याहवाचकेभ्यो ब्राह्मणेभ्यो दक्षिणां दास्ये। (वा विभाज्य मनोदिष्टां-दक्षिणां दातुमह मुत्सृज्ये) तेनः श्री कर्माधीशः प्रीयताम्।।

**''इति पुण्याह वाचनम्''**

# ''अथषड्विनायकार्चनम्''

तत्रादौ गोधूमादि धान्य पुञ्जेषु हरिद्रा रञ्जितेषु मोदादि षड्विनायकाः कल्पनीयाः।
मोदश्चैव प्रमोदश्च सुमुखो दुर्मुखस्तथा। अविघ्नो विघ्नहर्त्ता च षडेते विघ्ननायकाः।।
यजमानः शुभासने उपविश्य आचम्य प्राणानायम्य देशकालौ संस्मृत्य 'अस्मिन् कर्मणि मोदादिषड्विनायकादीनामावाहनं स्थापनं पूजनं च करिष्ये' इति संकल्प्य हस्ते अक्षतान् गृहीत्वा आवाहयेत्।
तद्यथा - ॐ मोदाय नमः मोदमावाहयामि स्थापयामि।।१।। ॐ प्रमोदाय नमः प्रमोदमावाहयामि स्थापयामि।।२।। ॐ सुमुखाय नमः सुमुखमावाहयामि स्थापयामि।।३।। ॐ दुर्मुखाय नमः दुर्मुखमावाहयामि स्थापयामि।।४।। ॐ अविघ्नाय नमः अविघ्नमावाहयामि स्थापयामि।।५।। ॐ विघ्नहर्त्रे नमः विघ्नहर्तारमावाहयामि स्थापयामि।।६।। ॐ मोदादिषड्विनायकेभ्यो नमः इत्युक्त्वा षोडशोपचारैः पञ्चोपचारैर्वा पूजयेत्।
**प्रार्थना - स्तुतिपाठ -** खर्वं स्थूलतनुं गजेन्द्रवदनं लम्बोदरं सुन्दरम् प्रस्यन्दन्मदगन्ध लुब्धमधुपव्यालोलगण्डस्थलम्। दन्ताघातविदारितारिरुधिरैः सिन्दूरशोभाकरं वन्दे शैलसुतासुतं गणपतिं सिद्धिप्रदं कामदम्।। मन्त्र पुष्पाञ्जलीम् समर्पयामि अनेन कृतेन पूजनेन मोदादिषड्विनायकाः प्रीयन्ता न मम। ''इतिषड्विनायकार्चनम्।।

# ''अथ षोडश मातृकापूजनम्''

**अथ गौर्यादिमातृणां स्थापनं पूजनम् -** अग्निकोणे पीठोपरि रक्त वस्त्रं प्रसार्य तदुपरि गोधूमाक्षत पुञ्जेषु पूगीफलेषु वा सगणाधिप गौर्यादि १६ मातृणां स्थापनम्।

**अक्षत पुष्पान्यादाय**

१. लम्बोदरं परम सुन्दर मेकदन्तं रक्ताम्बरं (पिताम्बरं) त्रिनयनं परमं पवित्रम्। उद्यद् दिवाकरं निभोज्जवलकान्ति कान्तं विघ्नेश्वरं सकल विघ्न हरं नमामि।। ॐ भूर्भुवः स्वः गणपतये नमः गणपतिमावाहयामि स्थापयामि वा भो गणपते इहागच्छ इहतिष्ठ।।१।।
२. हेमाद्रितनयां देवीं वरदां शङ्कर प्रियाम्। लम्बोदरस्य जननीं गौरीमावाहयाम्यहम्।। ॐ भूर्भुवः स्वः गौर्यै नमः गौरीमावाहयामि स्थापयामि।
३. पद्माभां पद्मवदनां पद्मनाभोरुसंस्थिताम्। जगत्प्रियां पद्मवासां पद्मामावा हयाम्हम।। ॐ भूर्भुवः स्वः पद्मायै नमः पद्मामावाहयामि स्थापयामि।
४. दिव्य रूपां विशालाक्षी शुचि कुण्डल धारिणीम्। रक्त मुक्ताद्यलङ्कारां शची मावाहयाम्यहम्।। ॐ भूर्भुवः स्वः शच्यै नमः शचिम् आ॰स्था॰

५. विश्वेऽस्मिन् भूमिवरदां जरां निर्जर सेविताम्। बुद्धिप्रबोधिनीं सौम्यां मेधामावाहयाम्यहम्।। ॐ भूर्भुवः स्वः मेधायै नमः मेधां आ॰स्था॰

६. जगत्सृष्टि करीम् धात्रीं देवीं प्रणवमातृकाम्। वेदगर्भाम् यज्ञमयीं सावित्रीं स्थापयाम्यहम्।। ॐ भूर्भुवः स्वः सावित्र्यै नमः सावित्रीम् आ॰स्था॰

७. सर्वास्त्र धारिणीं देवीं सर्वाभरण भूषिताम्। सर्वदेव स्तुतां वन्द्यां विजयां स्थापयाम्यहम्।। ॐ भूर्भुवः स्वः विजयायैनमः विजयाम् आ॰स्था॰

८. सर्वाबाधाप्रशमनं त्रैलोक्यस्याखिलेश्वरि। एवमेव त्वयाकार्य मस्मद्वैरि विनाशनम्।। ॐ भूर्भुवः स्वः जयायै नमः जयाम् आ॰स्था॰

९. शरणागत दीर्नात परित्राण परायणे। सर्वस्यार्ति हरे देवी नारायणि नमोस्तुते।। ॐ भूर्भुवः स्वः देवसेनायै नमः देवसेनाम् आ॰स्था॰

१०. दुर्वृतानामशेषाणां बलहानिकरं परम्। रक्षोभूत पिशाचानां पठनादेव नाशनम्।। ॐ भूर्भुवः स्व स्वधायै नमः स्वधाम् आ॰स्था॰

११. सर्वाबाधा विनिर्मुक्तो धनधान्य सुतान्वितः। मनुष्यो मत्प्रसादेन भविष्यति न संशयः ॐ भूर्भुवः स्वः स्वाहायैनमः स्वाहाम् आ॰स्था॰

१२. या देवी सर्वभूतेषु मातृ रूपेण संस्थिता। नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः।। ॐ भूर्भुवः स्वः मातृभ्योनमः मातृ आ॰स्था॰

१३. सर्व रूपमयी देवी सर्व देवीमयं जगत्। अतोऽहं विश्वरूपां तां नमामि परमेश्वरीम्।। ॐ भूर्भुवः स्वः लोकमातृभ्यो नमः लोकमातृः आ॰स्था॰

१४. महाविद्या महामाया महामेधा महास्मृतिः।। महामोहा च भवती महादेवी महासुरी।। ॐ भूर्भुवः स्वः धृत्यैनमः धृतिम् आ॰स्था॰

१५. सौम्या सौम्य तराशेष सौम्येभ्यस्त्वति सुन्दरी। परापराणां परमा त्वमेव परमेश्वरी।। ॐ भूर्भुवः स्वः पुष्टयै नमः पुष्टीम् आ॰स्था॰

१६. या देवी सर्व भूतेषु तुष्टी रूपेण संस्थिता। नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः।। ॐ भूर्भुवः स्वः तुष्टयै नमः तुष्टीम् आ॰स्था॰

१७. या श्रीः स्वयं सुकृतिनां भवनेष्वलक्ष्मीः पापात्मनां कृतधियां हृदयेषु बुद्धिः। श्रद्धा सतां कुलजन प्रभवस्य लज्जा तां त्वां नताः स्म परिपालय देवि विश्वम्।। ॐ भूर्भुवः स्वः आत्मनः कुलदेवतायै नमः आत्मनः कुलदेवता मावाहयामि स्थापयामि। ॐ मनोजूतिर्जुषता माज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञ ठं॰ समिमं दधातु विश्वे देवास इह मादयन्तामो३म्प्रतिष्ठ। ॐ भूर्भुवः स्वः श्री गणेश सहिताः षोडशमातरः सुप्रतिष्ठिता वरदा भवत। इति मन्त्रेण प्रतिष्ठा कृत्वा ॐ गौर्यै

नमः इत्यादि नाम मन्त्रैः पृथक-पृथक वा ॐ गौर्यादिषोडशमातृभ्यो नमः षोडशोपचारै (यथा लब्धोपचारैर्वा) पूजनम्।।

**नारिकेलादिफलं समर्पयेत -** आयुरारोग्यमैश्वर्यं ददध्वँ मातरोमम। निर्विघ्नं सर्वकार्येषु कुरुध्वं सगणाधिपाः।।

**पुष्पाञ्जली -** अक्षत पुष्पाण्यादाय्

गौरी पद्मा शची मेधा सावित्री विजया जया। देवसेना स्वधा स्वाहा मातरो लोकमातरः।। धृतिः पुष्टिस्तथा तुष्टिरात्मनः कुलदेवता गणेशेनाधिका ह्येता वृद्धौ पूज्याश्च षोडश।। रूपं देहि जयं देहि भाग्यं भगवती देहि में। पुत्रान् देहि धनं देहि सर्व कामांश्च देहि में।। अम्बा शाम्भवी चन्द्रमौली रमणावर्णा उमापार्वती काली हेमवती शिवा त्रिनयनी कात्यायानि भैरवी। सावित्री नव यौवना शुभकरी साम्राज्य लक्ष्मी प्रदा चिद्रूपी पर देवता भगवती श्री राज राजेश्वरी।।

मुखे ते ताम्बूलं नयनयुगले कज्जलकला, ललाटे काश्मीरं विलसति गले मौक्तिकलता। स्फुरत्कांची शाटी पृथुकटितटे हाटकमयी, भजामि त्वां गौरीनगपतिकिशोरीमविरतम्।।

(पुष्पाञ्जलि अर्पण करें।)

अनया पूजया गणेशसहित गौर्यादिषोडशमातरः प्रीयन्तां न मम। (जल छोड़ें)

श्री गौर्यादिषोडशमातृणां पूजन कर्मणो यन्न्यूनमतिरिक्तं वा तत्सर्वम् मातृणां प्रसादात्परिपूर्णमस्तु। "गृहे वृद्धि शतानि भवन्तु" उत्तरे कर्मण्यविघ्नमस्तु"। "इति वदेत्'

**।।इति मातृका पूजनम्।।**

# अथ वसोर्द्धारा ( सप्त घृत मातृका ) पूजनम्

**यजमान :** आचम्य प्राणायाम्यादिकं कृत्वा संकल्पं कुर्यात् देशकालौ सङ्कीर्त्य - करिष्यमाण अमुक याग कर्माङ्गत्वेन सप्तघृत मातृकार्चनम् करिष्ये। "एकोतर वृद्धि अनुसारेण सिन्दूर से सप्तबिन्दु लिखे"

**अथ ध्यानम् -** श्रीर्लक्ष्मीर्धृतिर्मेधा स्वाहा प्रज्ञा सरस्वती। माङ्गल्येषु प्रपूज्यन्ते सप्तैताघृत मातरः।।

**घृतधारा मन्त्रः -** ॐ वसो पवित्रमसिशतधारं वसोः पवित्र मसि सहस्रधारम्। देवस्त्वा सवितापुनातु वसोः पवित्रेण शतधारेण सुप्वा कामधुक्षः।। इति मंत्रेण सप्तधाराः कृत्वा तासामुर्ध्वं भागे गुडेनैकीकृत्य कुंकुमादिनाऽलंकृत्य प्रति धारामेकैकं देवतामावाहयेत्। (कामधुक्षः मन्त्रैण एकैकिकरणं)

## तद्यथा

१. **श्रियम् –** मनसः काममाकूतिं व्वाचः सत्यमशीमहि पशूनां ठ॰ रूपमन्नस्यमयि श्रीः श्रयतां यशः।। सुवर्णपद्महस्तां तां विष्णोर्वक्षःस्थले स्थिताम्। त्रैलोक्यवल्लभादेवीं श्रियमावाहयाम्यहम्।। ॐ भू॰ श्रियैनमः श्रियमावाहयामि स्थापयामि।।

२. **लक्ष्मीम् –** श्रीश्चते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यातम्। इष्णन्निषाणामुंमऽइषाण सर्व्वलोकं मऽइषाण।। शुभलक्षणसम्पन्नां क्षीरसागर संवृताम्। चन्द्रस्य भगिनीं सौम्यां लक्ष्मीमावाहयाम्यहम्।। ॐ भू॰ लक्ष्म्यै नमः लक्ष्मीमावाहयामि स्थापयामि।२।

३. **धृतिम् –** ॐ भद्रंकर्णेभिः शृणुयाम देवा भद्द्रं पश्येमाक्ष भिर्य्यजत्राः स्थिरैरङ्गैस्तुष्टुवा ठ॰ सस्तनू भिर्व्यशेमहि देवहितं यदायुः।। सर्वहर्ष करीं देवीं भक्तानामभयप्रदाम्। हर्षोत्फुल्लास्यकमलां धृतिमावाहयाम्हम्।। ॐ भू॰ धृत्यै नमः धृतिमावाहयामि स्थापयामि।३।

४. **मेधाम् –** ॐ मेधां मे वरुणो ददातु मेधामग्निः प्रजापतिः। मेधामिन्द्रश्च व्वायुश्चमेधांधाता दधातुमे स्वाहा।। मेधासि देवि विदिताखिलशास्त्रसारा, दुर्गासि दुर्गभवसागरनौरसङ्गा। श्रीःकैटभारिहृदयैक कृताधिवासा, गौरी त्वमेव शशि मौलिकृतप्रतिष्ठा।। ॐ भू॰ मेधायैनमः मेधामावाहयामि स्थापयामि।४।

५. **स्वाहाम् –** ॐ प्राणाय स्वाहा अपानाय स्वाहा व्यानाय स्वाहा चक्षुषे स्वाहा श्रोत्राय स्वाहा वाचे स्वाहा मन से स्वाहा।। त्वं स्वाहा त्वं स्वधा त्वं हि वषटकारः स्वरात्मिका। सुधा, त्वमक्षरे नित्ये त्रिधा मात्रात्मिका स्थिता।। ॐ स्वाहायैनमः स्वाहामावाहयामि स्थापयामि।५।

६. **प्रज्ञाम् –** ॐ आयङ्गौः पृश्निन रक्क्रमीदसदन्मातंरपुरः। पितरंच प्रयन्त्स्वः। विद्यासु शास्त्रेषु विवेकदीपे ष्वाद्येषु वाक्येषु च का त्वदन्या। ममत्वगर्तेऽतिमहान्धकारे विभ्रामयत्ये तदतीव विश्वम्।। ॐ भू॰ प्रज्ञायै नमः प्रज्ञामावाहयामि स्थापयामि।६।

७. **सरस्वतीम् –** ॐ पावका नः सरस्वती व्वाजेभिर्व्वाजि नीवति। यज्ञं व्वष्टुधियावसुः।। विद्यावन्तं यशस्वन्तं लक्ष्मीवन्तं जनंकुरु। रुपं देहि जयं देहि यशो देहि द्विषो जहि।। ॐ भू॰ सरस्वत्यै नमः सरस्वतीमावाहयामि स्थापयामि।७। वसोर्द्धारा देवताभ्यो नमः। श्रियादिसप्तधृतमातृभ्यो नमः इत्यावाह्य ॐ मनोजूति॰ – वसोर्द्धारा देवताः सुप्रतिष्ठिताः वरदाः भवन्तु। अक्षतं पुष्पं समर्पयामि।।

श्रीसूक्तं, कनकधारा वा अन्नपूर्णास्तोत्र से षोडशोचारै सम्पूज्य प्रार्थयेत्।

यदङ्गत्वेन भो देव्यः पूजिता विधिमार्गतः। कुर्वन्तु कार्यमखिलं निर्विघ्नेन क्रतूद्भवम्।।

**यजमान :** 'आचरितवसोर्द्धारा पूजनविधौ यन्न्यूनातिरिक्तं तत्सर्वं परिपूर्णमस्तु' इति कृताञ्जलिः प्रार्थयेत्। पश्चात् 'अनया पूजया श्रियादिसप्तघृतमातरः प्रीयन्ताम्' – न मम।।

। इति वसोर्द्धारा पूजनम्।

**अथ आयुष्य मन्त्र जप -** देशकालौ संक्कीर्त्य - करिष्यमाण अमुक याग कर्मणः मङ्गल अभ्युदयार्थम् आयुष्य वृद्धि अर्थम् मन्त्र पाठं करिष्ये।

ॐ आयुष्यं व्वर्च्चस्य ठं॰ रायस्पोषमौद्भिदम्। इद ठं॰ हिरण्यं व्वर्च्चस्वज्जैत्राया विशतादुमाम्।।१।। न तद्रक्षाठंसि न पिशाचास्तरन्ति देवानामोजः प्प्रथमज ठं॰ ह्येतत्। यो बिभर्त्ति दाक्षायण ठं॰ हिरण्य ठं॰ स देवेषु कृणुते दीर्घमायुः स मनुष्येषु कृणुते दीर्घमायुः।।२।। यदाबध्नन्दाक्षायणा हिरण्य ठं॰ शतानीकाय सुमनस्यमानाः। तन्म ऽआबध्नामि शतशारदायायुष्माञ्जरदष्टिर्य्यथासम्।।३।।

अश्वत्थामादिऋषयो वशिष्ठप्रमुखास्तथा। मार्कण्डेयप्रभृतयः सर्वे सन्तु शिवाचकाः।।१।।
जमदग्निः कश्यपश्च दीर्घमायुः करोतु मे। अन्ये ऋषिगणा देवा इन्द्राद्याश्च सशक्तिकाः।।२।।
भूसुराः सुतपोनिष्ठाः सत्यव्रतपरायणाः। दीर्घमायुः प्रयच्छन्तु सर्वकामस्य सिद्धये।।३।।
यदायुष्यं चिरं देवाः सप्तकल्पान्तजीविनः। ददुस्तेनायुषा सम्यक् जीवेम शरदः शतम्।।४।।
दीर्घा नागास्तथा नद्यः समुद्रा गिरयो दिशः। अनन्तेनायुषा तेन जीवेम शरदः शतम्।।५।।
सत्यानि पञ्च भूतानि विनाशरहितानि च। अविनाश्यायुषा तद्वज्जीवेम शरदः शतम्।।६।।
इत्यायुष्यमन्त्र जपः।

# अथ साङ्कल्पिक विधिना नान्दी - श्राद्धप्रयोगः

**संस्कार गणपती -** एकविंशत्यहर्यज्ञे विवाहे दश वासराः। त्रिषट्चौलोपनयने नान्दी श्राद्धं विधीयते।।

**पुराणसमुच्चयेच -** "न स्वधा शर्मवर्मेति पितृनाम न चोच्चरेत्। न कर्म पितृतीर्थेन न कुशा द्विगुणीकृताः।। न तिलैनापसव्येन पित्र्यमन्त्रविवर्जितम्। अस्मच्छब्दं न कुर्वीत श्राद्धे नान्दीमुखे क्वचित्। **अत्र - 'पितृनाम न चोच्चरेत्'' ''अस्मच्छब्दं न कुर्वीत।'' इति शाखान्तरं विषयं,** स्वशाखायां न स्वधां प्रयुञ्जीतेति स्वधा शब्दमात्र निषेधस्योपलम्भात्।

सव्य होकर दक्षिण जंघा को मोड़कर देवतीर्थ से कर्म करे। षोडश मातृका के सामने नान्दी श्राद्ध करे। कर्मपात्र में दूर्वा, दधि, गन्ध, पुष्प यव डाले। आचमन प्राणायाम व विष्णु स्मरण करे।।

ॐ श्राद्धकाले गयां ध्यात्वा ध्यात्वा देवं गदाधरम्। मनसा च पितृन्ध्यात्वा नान्दी श्राद्धं समारभेत्।।

ॐ अपवित्रः पवित्रो॰ - "इति मंत्रेण संप्रोक्ष्य" अथ संङ्कल्प - देशकालौ संक्कीर्त्य- मम सम्भाव्यमान जननाशौचपातकादि निरसन पूर्वकः अमुक याग कर्मणः साङ्गता सिद्धि द्वारा श्री परमेश्वर प्रीत्यर्थम् सांकल्पिक विधिना ब्राह्मण युग्म भोजन-पर्याप्तन्न निष्क्रयीभूत यथा शक्ति हिरण्येन नान्दी श्राद्धं करिष्ये। "इति संकल्प्य"

**कर्ता ताम्रपात्र में दूर्वा यव जल लेकर प्रथम चट पर पाद्य देवे -**

"ॐ सत्यवसुसंज्ञका विश्वेदेवा नान्दीमुखाः ॐ भूर्भुवः स्वः इदं वः पाद्यं पादावनेजनं पादप्रक्षालनं स्वाहा सम्पद्यतां वृद्धिः"।।१।। "अमुक गोत्रा मातृपितामहीप्रपितामह्य नान्दीमुख्यः ॐ भूर्भुवः स्वः इदं व पाद्यं पदावनेजनं पादप्रक्षालनं स्वाहा सम्पद्यतां वृद्धिः"।

"अमुक गोत्राः पितृपितामहप्रपितामहा नान्दीमुखाः ॐ भूर्भुवः स्वः इदं व पाद्यं पादावनेजनं पादप्रक्षालनं स्वाहा सम्पद्यतां वृद्धिः"।

"द्वितीयगोत्राः – मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीका नान्दीमुखाः – ॐ भुर्भूवः इदं व पाद्यं पादावनेजनं पादप्रक्षालनं स्वाहाः सम्पद्यतां वृद्धिः"।

## अथासनदानम्

"सत्यवसुसंज्ञकानां विश्वेषां देवानां नान्दीमुखानां ॐ भूर्भुवः स्वः इदमासनं सुखासनं स्वाहा नमः सम्पद्यतां वृद्धिः। नान्दीश्राद्धे क्षणौ क्रियेताम्। ॐ तथा प्राप्नुतां भवन्तौ प्राप्नुवामः'।।१।।

"अमुकगोत्राणां मृातपितामहीप्रपितामहीनां नान्दीमुखीनां ॐ भूर्भुवः स्वः इदमासनं सुखासनं स्वाहा नमः सम्पद्यतां वृद्धिः। नान्दी श्राद्धे क्षणौ क्रियेताम् ॐ तथा प्राप्नुतां भवन्तौ प्राप्नुवामः"।।२।।

"अमुकगोत्राणां पितृपितामहप्रपितामहानां नान्दीमुखानां ॐ भुभूर्वः स्वः इदमासनं सुखासनं स्वाहा नमः सम्पद्यतां वृद्धि नान्दी श्राद्धे क्षणौ क्रियेताम्। ॐ तथा प्राप्नुतां भवन्तौ प्राप्नुवामः"।।३।।

द्वितीयगोत्राणां मातामहप्रमातामहवृद्धप्रमातामहानां सपत्नीकानां नान्दीमुखानां ॐ भूर्भुवः स्वः इदमासनं सुखासनं स्वाहा नमः सम्पद्यतां वृद्धिः। नान्दीश्राद्धे क्षणौ क्रियेताम्। ॐ तथा प्राप्नुतां भवन्तौ प्राप्नुवामः"।।४।।

## गन्धादिदानम्

**कर्ता गन्ध, पुष्प, धूप, दीप, ताम्बूल, यज्ञोपवीत और वस्त्र ( धोती गोच्छा ) आसन पर धरे -**

"ॐ सत्यवसुसंज्ञकेभ्यो विश्वेभ्योदेवेभ्यो नान्दीमुखेभ्य इदं गन्धाद्यर्चनं स्वाहा सम्पद्यतां वृद्धिः"।।१।।

"अमुकगोत्राभ्यो मातृपितामहीप्रपितामहीभ्यो नान्दीमुखीभ्य इदं गन्धाद्यर्चनं स्वाहा सम्पद्यतां वृद्धिः"।।२।।

अमुकगोत्रेभ्यः पितृपितामहप्रपितामहेभ्यो नान्दीमुखेभ्य इदं गन्धाद्यर्चनं स्वाहा सम्पद्यतां वृद्धिः"।।३।।

"द्वितीयगोत्रेभ्यो मातामहप्रमातामहवृद्धप्रमातामहेभ्यः सपत्नीकेभ्यो नान्दीमुखेभ्य इदं गन्धाद्यर्चनं स्वाहा सम्पद्यतां वृद्धिः"।।४।।

## ततो भोजननिष्क्रय द्रव्यदानम्

**कर्ता दक्षिणहस्त में हिरण्य जल लेकर -**

"ॐ सत्यवसुसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यो नान्दीमुखेभ्यो ब्राह्मणयुग्मभोजनपर्याप्तमन्नं तन्निष्क्रयीभूतं हिरण्यंदत्तममृतरूपेण स्वाहा सम्पद्यतां वृद्धिः"।।१।।

"अमुक गोत्राभ्यो मातृपितामहीप्रपितामहीभ्यो नान्दीमुखीभ्यो ब्राह्मणयुग्मभोजनपर्याप्तमन्नं तन्निष्क्रयीभूतं हिरण्यंदत्तममृतरूपेण स्वाहा सम्पद्यतां वृद्धिः"।।२।।

अमुकगोत्रेभ्यः पितृपितामहप्रपितामहेभ्यो नान्दीमुखेभ्यो ब्राह्मणयुग्मभोजनपर्याप्तमन्नं तन्निष्क्रयीभूतं हिरण्यंदत्तममृतरूपेण स्वाहा सम्पद्यतां वृद्धिः"।।३।।

"**द्वितीयगोत्रेभ्यो** मातामहप्रमातामहवृद्धप्रमातामहेभ्यः सपत्नीकेभ्यो नान्दीमुखेभ्यो ब्राह्मणयुग्मभोजनपर्याप्तमन्नं तन्निष्क्रयीभूतं हिरण्यंदत्तममृतरूपेण स्वाहा सम्पद्यतां वृद्धिः"।।४।।

## सक्षीरमुदकदानम्

"ॐ सत्यवसुसंज्ञकाविश्वेदेवा नान्दीमुखाः प्रीयन्ताम्।।१।।

"अमुकगोत्राः मातृपितामहीप्रपितामह्यो नान्दीमुख्यः प्रीयन्ताम्"।।२।।

"अमुकगोत्राः पितृपितामहप्रपितामहा नान्दीमुखाः प्रीयन्ताम्"।।३।।

**द्वितीयगोत्राः** मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीका नान्दीमुखाः प्रीयन्ताम्"।।४।।

## अथाऽऽशिषो ग्रहणम्

**कर्ता साञ्जलि प्रार्थना करे -**

यजमान कहे - "गोत्रं नो वर्द्धताम्"।
ब्राह्मण कहे - "वर्द्धतां वो गोत्रम्"।
यजमान कहे - "दातारो नोऽभिवर्द्धन्ताम्"।
ब्राह्मण कहे - "अभिवर्द्धन्तां वो दातारः"।
यजमान कहे - "वेदाश्च नोऽभिवर्द्धन्ताम्"।
ब्राह्मण कहे - "अभिवर्द्धन्तां वो वेदाः"।
यजमान कहे - "सन्ततिर्नोऽभिवर्द्धताम्"।
ब्राह्मण कहे - "वर्द्धतां वः सन्ततिः"।
यजमान कहे - "श्रद्धा च नो माव्यगमत्"।
ब्राह्मण कहे - "माव्यगमद्वः श्रद्धा"।
यजमान कहे - "बहुदेयं च नोऽस्तु"।

ब्राह्मण कहे - "अस्तु वो बहुदेयम्"।
यजमान कहे - "अन्नं च नो बहु भवेत्"।
ब्राह्मण कहे - "भवतु वो बह्वन्नम्"।
यजमान कहे - "अतिथिश्च लभेमहि"।
ब्राह्मण कहे - "लभन्तां वोऽतिथयः"।
यजमान कहे - "याचितारश्च नः सन्तु"।
ब्राह्मण कहे - "सन्तु वो याचितारः"।
यजमान कहे - "एता आशिषः सत्याः सन्तु"।
ब्राह्मण कहे - "सन्त्वेताः सत्याशिषः"।

## दक्षिणादानम्

"ॐ सत्य वसुसंज्ञकेभ्यो विश्वेभ्योदेवेभ्यो नान्दीमुखेभ्यः कृतस्य नान्दीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थं द्राक्षा मलक यवमूल निष्क्रयी दक्षिणां दातुमहमुत्सृज्ये सम्पद्यतां वृद्धिः"।।१।।

"अमुकगोत्राभ्यो मातृपितामही प्रपितामहीभ्यो नान्दीमुखीभ्यः कृतस्य नान्दीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थं द्राक्षामलकयवमूल निष्क्रयी दक्षिणां दातुमहमुत्सृज्ये सम्पद्यतां वृद्धिः"।।२।।

"अमुकगोत्रेभ्यो पितृपितामहप्रपितामहेभ्यो नान्दीमुखेभ्यः कृतस्य नान्दीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थं द्राक्षामलक यवमूलनिष्क्रयी दक्षिणां दातुमहमुत्सृज्ये सम्पद्यतां वृद्धिः"।।३।।

"**द्वितीयगोत्रेभ्यो** मातामहप्रमातामहवृद्धप्रमातामहेभ्यः सपत्नीकेभ्यो नान्दीमुखेभ्यः कृतस्य नान्दीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थं द्राक्षामलकयवमूलनिष्क्रयी दक्षिणां दातुमहमुत्सृज्ये सम्पद्यतां वृद्धिः"।।४।।

यजमान कहे - "नान्दीश्राद्धं सम्पन्नम्"।
ब्राह्मण कहे - 'सुसम्पन्नम्"

**विसर्जनम् -** ॐव्वाजेवाजेऽवत व्वाजिनो नो धनेषु विप्राऽअमृता ऽऋतज्ञाः। अस्य मध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्द्देवयानैः।।

ॐ आमा व्वाजस्य प्प्रसवो जगम्म्यादेमे द्यावापृथिवी विश्वरूपे। आ मा गन्तां पितरा मातरा चा मा सोमोऽअमृतत्त्वेन गम्म्यात्।। विश्वेदेवाः प्रीयन्तामिति।

**यजमान :** 'मयाऽऽचरितेऽस्मिन् साङ्कल्पिकनान्दीश्राद्धे न्यूनातिरिक्तो यो विधिः स उपविष्टब्राह्मणानां वचनाच्छ्रीगणपतिप्रसादाच्च परिपूर्णोस्तु'। 'अस्तु परिपूर्णः' इति ब्राह्मणाः। अनेन सांकल्पिकनान्दीश्राद्धेन नान्दीमुखाः पितरः प्रीयन्ताम्।

**इति साङ्कल्पिकनान्दीश्राद्धविधिः।**

**नोट :** नान्दीश्राद्ध में द्वादश चट, चारचट, आठ चट आदि का विधान है। अतः स्वयं की इच्छा अनुसार निर्णय करे। (पिण्ड दान विधि से भी किया जाता है।)

# अथाचार्यादि वरणम्

**हस्ते जलमादाय -** ॐ तत्सत्-आचार्यादि ऋत्विजां वरण महंकरिष्ये, उदङ्मुखमाचार्यमुपवेश्य पाद प्रक्षालनपूर्वकं गन्धादिभि सम्पूज्य हस्ते वरणद्रव्य जलाक्षतान्यादाय दक्षिण जानुं स्पृष्टवा आचार्य वृणुयात ॐ तत्सत् - अमुक गोत्र प्रवर शाखान्वित यजमानोऽहम्।

अमुक गोत्र प्रवर शाखाध्यायिनममुक नामानमाचार्यम् अस्मिन कर्तव्ये अमुक यागख्ये कर्मणि दास्यमानैः एभिर्वरण द्रव्यैः आचार्यत्वेन त्वामहं वृणे।

**वरण सामग्री** (वस्त्र, कमण्डलु, स्वर्ण अंगूठी, आसन, उपवीत, ताम्बुल दक्षिणा)

**आचार्य :** 'वृतोऽस्मि' इति वदेत्। ॐ व्रतेन दीक्षामाप्नोति दीक्षयाप्नोति दक्षिणाम्। दक्षिणा श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते।। इति मन्त्रं पठेत्। ततो **यजमानः** पाद्य-अर्घ्यं-गन्ध-अक्षत-पुष्प-मालादिभिराचार्य सम्पूज्य, तस्य दक्षिणहस्ते रक्तसूत्ररूप-कङ्कणबन्धनं **कुर्यात्**। ॐ यदाबध्नन् दाक्षायणा हिरण्य ठं॰ शतानीकाय सुमनस्यमानाः। तन्म ऽआ बध्नानि शतशारदायायुष्माञ्जरदष्टिर्य्यथासम्।।

तत **आचार्य प्रार्थयेत् -** ॐ बृहस्पते ऽअति यदर्य्यो ऽअर्हाद् द्युमद्विभाति क्रतुमज्जनेषु। यद्दीदयच्छवस ऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम्।। आचार्यस्तु यथा स्वर्गे शक्रादीनां बृहस्पतिः। तथा त्वं मम यज्ञेऽस्मिन्नाचार्यो भव सुव्रत।। यावत्कर्म समाप्येत तावत्त्वमाचार्यो भव।। 'भवामि' इत्याचार्यों वदेत्। (मधुपर्कार्चनम् भी कर सकते हैं)

**ब्रह्मवरणम् - यजमानः -** 'अस्मिन् याग - कर्मणि एभिर्वरणद्रव्यैरमुक-गोत्रममुकशर्माणं ब्राह्मणं ब्रह्मत्वेन त्वामहं वृणे।' ॐ ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो व्वेन ऽआवः। स बुद्धन्या ऽउपमा ऽअस्य व्विष्ठ्ठाः सतश्च योनिमसतश्च विवः।। यथा चतुर्मुखो ब्रह्मा सर्ववेदविशारदः। तथा त्वं मम यज्ञेऽस्मिन् ब्रह्मा भव द्विजोत्तम।

**सदस्यवरणम् - यजमानः** - 'अस्मिन् याग कर्मणि एभिर्वरणद्रव्यैरमुक-गोत्रममुकशर्माणं ब्राह्मणं सदस्यत्वेन त्वामहं वृणे'। ॐ सदसस्पतिमद्भुतं प्रियमिन्द्रद्स्यकाम्यम्। सनिं मेधामयासिष ठं॰ स्वाहा। त्वन्नो गुरुः पिता माता त्वं प्रभुस्त्वं परायणः। आपद्विमोक्षणार्थाय सदस्यो भव मे मखे।

**ऋत्विग्वरणम् - यजमानः** - 'अस्मिन् यागकर्मणि एभिर्वरणद्रव्यैरमुक गोत्रममुकशर्माणं ब्राह्मणं ऋत्विक्त्वेन (होतृत्वेन) त्वामहं वृणे।' ॐ ब्राह्मणासः पितरः सोम्मयासः शिवे नो द्यावापृथिवीऽअनेहसा। पूषा नः पातु दुरितादृतावृधो रक्षा माकिर्न्नोऽअघश ठं॰ सऽईशत।।

भगवन् सर्वधर्मज्ञ सर्वधर्मभृताम्बर।
वितते मम यज्ञे ऽस्मिन् ऋत्विक् त्वं मे मखे भव।।

एवमेव चतुरोष्टौ वा द्वारपालान् वृणुयात्। एवं ऋत्विजो वृत्वा प्रार्थयेत् - (प्रार्थना करे)

**ब्राह्मणाः** सन्तु मे शास्ताः पापात्पान्तु समाहिताः। देवानां चैव दातारस्त्रातारः सर्वदेहिनाम्।।१।।
जपयज्ञैस्तथा होमैर्दानैश्च विविधैः पुनः। देवानाञ्च ऋषीणाञ्च तृप्त्यर्थं याजकाः स्मृताः।।२।।
येषां देहे स्थिता वेदाः पावयन्ति जगत्त्रयम्। रक्षन्तु सततं ते मां ग्रहयज्ञे व्यवस्थिताः।।३।।
ब्राह्मणा जङ्गमं तीर्थं त्रिषु लोकेषु विश्रुतम्। येषां वाक्योदकेनैव शुद्ध्यन्ति मलिना जनाः।।४।।
पावनाः सर्ववर्णानां ब्राह्मणाः ब्रह्मरूपिणः। सर्वकर्मरताः नित्यं वेदशास्त्रार्थकोविदाः।।५।।
श्रोत्रियाः सत्यवाचश्च देवध्यानरताः सदा। यद्वाक्यामृतसंसिक्ता ऋद्धिं यान्ति नरद्रुमाः।।६।।
अङ्गीकुर्वन्तु कर्मैतत्कल्पद्रुमसमाशिषः। यथोक्तनियमैर्युक्ता मन्त्रार्थे स्थिरबुद्धयः।।७।।
यत्कृपालोचनात् सर्वा ऋद्धयो वृद्धिमाप्नुयुः। ग्रहयागे मया पूज्याः सन्तु मे नियमान्विताः।।८।।
अक्रोधनाः शौचपराः सततं ब्रह्मचारिणः। ग्रहध्यानरताः नित्यं प्रसन्नमनसः सदा।।९।।
अदुष्टभाषणाः सन्तु मा सन्तु परनिन्दकाः। ममापि नियमा ह्येते भवन्तु भवतामपि।।१०।।
ऋत्विजश्च यथा पूर्वं शक्रादीनां मखेऽभवन्। यूयं तथा मे भवत ऋत्विजो द्विजसत्तमाः।।११।।
अस्य यागस्य निष्पत्तौ भवन्तोऽभ्यर्चिताः मया। सुप्रसन्नैः प्रकर्तव्यं कर्मेदं विधिपूर्वकम्।।१२।।

**यजमान प्रार्थना करे** - यथाविहितं कर्म कुरु (एक तन्त्र पक्षे - कुरुतः)

**ब्राह्मण** - यथाज्ञानं करवाणि (एक तन्त्र पक्षे - करवामः)

एक साथ में वरण करने हेतु - अस्मिन याग कर्मणि एभिर्वरणनिष्क्रयद्रव्यैर्नानागोत्रान् नाना शर्म्मणो ब्राह्मणान् आचार्यादीन् युष्मानहं वृणे।।

विप्राः - वृताःस्म

# हनुमत्पीठपूजनम्

ॐ मं मण्डूकाय नमः। ॐ कां कालाग्निरुद्राय नमः। ॐ कूं कूर्माय नमः। ॐ आं आधारशक्तये नमः। उपर्युपरि – ॐ मूं मूलप्रकृत्यै नमः। ॐ वं वराहाय नमः। ॐ अं अमृतसागराय नमः। तन्मध्ये – ॐ रं रत्नदीपाय नमः। ॐ हें हेमगिरये नमः। ॐ नं नन्दनोद्यानाय नमः। ॐ कं कल्पवृक्षेभ्यो नमः। ॐ मं मणिभूषितभूतलाय नमः। ॐ तत्र – ॐ रं रत्नमण्डपाय नमः। ॐ रं रत्नसिंहासनाय नमः। अग्निकोणे – ॐ धं धर्माय नमः। नैर्ऋत्यकोणे – ॐ ज्ञां ज्ञानाय नमः। वायुकोणे – ॐ वैं वैराग्याय नमः। ईशानकोणे – ॐ ऐं ऐश्वर्याय नमः। पूर्वे – ॐ अं अधर्माय नमः। दक्षिणे – ॐ अं अज्ञानाय नमः। पश्चिमे – ॐ अं अवैराग्याय नमः। उत्तरे – ॐ अं अनैश्वर्याय नमः। पीठमध्ये – ॐ आं आनन्दमयकन्दाय नमः। ॐ सं संविन्नालाय नमः। ॐ विं विश्वमयपद्माय नमः। ॐ प्र प्रकृतिमयपद्रेभ्यो नमः। ॐ विं विकारमयकेसरेभ्यो नमः। ॐ पं पञ्चाशद्वर्णाढ्यकर्णिकायै नमः। कर्णिकायाम् – ॐ अं द्वादशकलात्मने सूर्यमण्डलाय नमः। ॐ षोडशकलात्मने सोममण्डलाय नमः। ॐ मं दशकलात्मने वह्निमण्डलाय नमः। ॐ सं सत्त्वाय नमः। ॐ रं रजसे नमः। ॐ तं तमसे नमः। ॐ आं आत्मने नमः। ॐ अं अन्तरात्मने नमः। ॐ पं परमात्मने नमः। ॐ ज्ञां ज्ञानात्मने नमः। ॐ मां मायातत्त्वाय नमः। ॐ कं कलातत्त्वाय नमः। ॐ विं विद्यातत्त्वाय नमः। ॐ पं परतत्त्वाय नमः। ॐ पत्रेषु मध्ये च पीठशक्तीर्ध्यायेत्।

श्वेता कृष्णाऽरुणा पीता श्यामा रक्ता सिताऽसिताः। रक्ताम्बराभयधरा ध्येयाः स्युः पीठशक्तयः।।

इति ध्यात्वा पूजयेत्। ॐ विमलायै नमः। ॐ उत्कर्षिण्यै नमः। ॐ ज्ञानायै नमः। ॐ क्रियायै नमः। ॐ योगायै नमः। ॐ प्रह्व्यै नमः। ॐ सत्यायै नमः। ॐ ईशानायै नमः। ॐ अनुग्रहायै नमः। ॐ नमो भगवते रुद्राय सर्वभूतात्मने हनुमते सर्वात्मसंयोगपद्मपीठात्मने नमः।

# कालभैरवपीठपूजनम्

पुष्पाक्षतानादाय स्ववामभागे – श्रीगुरुभ्यो नमः। दक्षिणे – गणपतये नमः। मध्ये – स्वेष्टेवतायै नमः।

पीठमध्ये – ॐ मं मंडूकाय नमः। ॐ कं कालाग्निरुद्राय नमः। ॐ आं आधारशक्तये नमः। ॐ कूं कूर्माय नमः। ॐ अं अनन्ताय नमः। ॐ पृं पृथिव्यै नमः। ॐ क्षीं

क्षीरसागराय नमः। ॐ रं रत्नदीपाय नमः। ॐ रं रत्नवेदिकायै नमः। ॐ रं रत्नसिंहासनाय नमः।
आग्नेय्याम् – ॐ धं धर्माय नमः। नैर्ऋत्याम् – ॐ ज्ञां ज्ञानाय नमः। वायव्याम् – ॐ वैं वैराग्याय नमः। ऐशान्याम् – ॐ ऐं ऐश्वर्याय नमः। पूर्वे – ॐ अं अर्धमाय नमः। दक्षिणे – ॐ अं अज्ञानाय नमः। पश्चिमे – ॐ अं अवैराग्याय नमः। उत्तरे – ॐ अं अनैश्वर्याय नमः।
पुनः पीठमध्ये – ॐ आं आनन्दकन्दाय नमः। ॐ सं संविन्नालाय नमः। ॐ सं सर्वतत्त्वकमलासनाय नमः। ॐ प्रं प्रकृतिमयपत्रेभ्यो नमः। ॐ विं विकारमयकेशरेभ्यो नमः। ॐ पं पञ्चाशद्वर्णाढ्यकर्णिकाभ्यो नमः। ॐ अं अर्कमण्डलाय द्वादशकलात्मने नमः। ॐ सों सोममण्डलाय षोडशकलात्मने नमः। ॐ वं वह्निमण्डलाय दशकलात्मने नमः। ॐ सं सत्त्वाय नमः। ॐ रं रजसे नमः। ॐ तं तमसे नमः। ॐ आं आत्मने नमः। ॐ पं परमात्मने नमः। ॐ अं अन्तरात्मने नमः। ॐ ह्रीं ज्ञानात्मने नमः। ॐ मां मायातत्त्वाय नमः। ॐ कं कलातत्त्वाय नमः। ॐ विं विद्यातत्त्वाय नमः। ॐ पं परतत्त्वाय नमः। (पीठदेवता का पूजन कर नव पीठशक्तियों की पूजा निम्न क्रम से करें।)
पूर्वे – ॐ वां वामायै नमः। आग्नेय्याम् – ॐ ज्यें ज्येष्ठयै नमः। दक्षिणे – ॐ रौं रौद्यै नमः। नैर्ऋत्ये – ॐ कां काल्यै नमः। पश्चिमे – ॐ कं कलविकरण्यै नमः। वायव्ये – ॐ बं बलविकरण्यै नमः। उत्तरे – ॐ बं बलप्रमथिन्यै नमः। ऐशान्ये – ॐ सं सर्वभूतदमन्यै नमः। पीठमध्ये – ॐ मनोन्मन्यै नमः। ततो – ॐ मनोजूतिर्जुष॰ इति मन्त्रेण पीठदेवताः सुप्रतिष्ठिता वरदा भवन्तु इति प्रतिष्ठाप्य आवाहित पीठदेवताभ्यो नमः। इति नाममन्त्रेण षोडशोपचारैः सम्पूज्य हस्ते पुष्पांजलि गृहीत्वा – ॐ नमो भगवते कालभैरवाय सकलगुणात्मशक्तियुक्तायानन्तायोग पीठात्मने नमः।

# लक्ष्मीनारायणपीठपूजनम्

गन्धाक्षतपुष्पैः पीठोपरि मध्ये – ॐ आधारशक्तये नमः। ॐ प्रकृत्यै नमः। ॐ कूर्माय नमः। ॐ वाराहाय नमः। ॐ पृथिव्यै नमः। ॐ क्षीरनिधये नमः। ॐ श्वेतदीपाय नमः। ॐ रत्नोज्वलितसुवर्णमण्डपाय नमः। ॐ कल्पवृक्षाय नमः। ॐ स्वर्णवेदिकायै नमः। ॐ सिंहासनाय नमः। इति सम्पूज्य।
पीठदक्षिणे – ॐ गुरुभ्यो नमः। वामे – ॐ दुर्गायै नमः। ॐ विघ्नेशाय नमः। ॐ क्षेत्रपालाय नमः। अग्रे – ॐ गरुडाय नमः। ईशान्याम् – ॐ विष्वक्सेनाय नमः। ॐ पञ्चाशद्वर्णाढ्यकर्णिकायै नमः। ॐ द्वादशकलात्मने सूर्यमण्डलाय नमः।

ॐ षोडशकलात्मने सोममण्डलाय नमः। ॐ मंद करात्मने वह्निमण्डलाय नमः। ॐ शक्तिमण्डलाय नमः। ॐ ब्रह्मणे नमः। ॐ विष्णवे नमः। ॐ ईशानाय नमः। ॐ कुबेराय नमः। ॐ ऋग्वेदाय नमः। ॐ यजुर्वेदाय नमः। ॐ सामवेदाय नमः। ॐ अथर्ववेदाय नमः। ॐ आं आत्मने नमः। ॐ अं अन्तरात्मने नमः। ॐ पं परमात्मने नमः। ॐ ह्रीं ज्ञानात्मने नमः। ॐ कृताय नमः। ॐ त्रेताय नमः। ॐ द्वापराय नमः। ॐ कलये नमः। ॐ सं सत्वाय नमः। ॐ रं रजसे नमः। ॐ तं तमसे नमः। ॐ अणिम्ने नमः। ॐ गरिम्णे नमः। ॐ लघिम्ने नमः। ॐ महिम्ने नमः। ॐ प्राप्त्यै नमः। ॐ प्राकाम्यै नमः। ॐ ईशित्वायै नमः। ॐ वशित्वायै नमः।

ततः पूर्वादिपत्रेषु – ॐ विमलायै नमः। ॐ उत्कर्षिण्यै नमः। ॐ ज्ञानायै नमः। ॐ क्रियायै नमः। ॐ योगायै नमः। ॐ प्रज्ञायै नमः। ॐ सत्यायै नमः। ॐ ईशानायै नमः। ॐ पुनर्मध्ये अनुग्रहायै नमः। ततः – 'ॐ मनो जूतिर्जु॰' इति मन्त्रेण 'पीठदेवता सुप्रतिष्ठिता वरदा भवन्तु' आवाहितपीठदेवताभ्यो नमः इति षोडशोपचारैः।

# सूर्यपीठपूजनम्

ॐ आधारशक्तये नमः। ॐ मूल प्रकृत्यै नमः। ॐ कूर्माय नमः। ॐ अनन्ताय नमः। ॐ वराहाय नमः। ॐ पृथिव्यै नमः। ॐ सुवर्णमण्डलाय नमः। ॐ रत्नसिंहाय नमः। ॐ धर्माय नमः। ॐ अधर्माय नमः। ॐ ज्ञानाय नमः। ॐ अज्ञानाय नमः। ॐ वैराग्याय नमः। ॐ अवैराग्याय नमः। ॐ ऐश्वर्याय नमः। ॐ अनैश्वर्याय नमः। ॐ ऋग्वेदाय नमः। ॐ यजुर्वेदाय नमः। ॐ सामवेदाय नमः। ॐ अथर्ववेदाय नमः। ॐ कृतयुगाय नमः। ॐ त्रेतायुगाय नमः। ॐ द्वापराय नमः। ॐ कलियुगाय नमः। ॐ मन्दराय नमः। ॐ पारिजाताय नमः। ॐ सन्तानाय नमः। ॐ कल्पवृक्षाय नमः। ॐ मूलप्रकृत्यै नमः। ॐ स्कन्दाय नमः। ॐ नालाय नमः। ॐ पत्रेभ्यो नमः। ॐ पद्मेभ्यो नमः। ॐ यक्षेभ्यो नमः। ॐ केसरेभ्यो नमः। ॐ दलेभ्यो नमः। ॐ कर्णिकायै नमः। ॐ सूर्यमण्डलाय नमः। ॐ सोममण्डलाय नमः। ॐ वह्निमण्डलाय नमः। ॐ ब्रह्मणे नमः। ॐ विष्णवे नमः। ॐ रुद्राय नमः। ॐ सत्वाय नमः। ॐ रजसे नमः। ॐ तमसे नमः। ॐ आत्मने नमः। ॐ अन्तरात्मने नमः। ॐ परमात्मने नमः। ॐ चिदात्मकाय नमः। ॐ भूः पुरुषाय नमः। ॐ भुवः पुरुषाय नमः। ॐ स्वः पुरुषाय नमः। ॐ भूर्भुवः स्व पुरुषाय नमः। ॐ अरुणाय नमः।

# ।।चतुर्लिङ्गतोभद्र मण्डल पूजनम्।।

**संकल्प -** आचम्य प्राणानायम्य हस्ते जलमादाय अद्येत्यादि पूर्वोच्चारित शुभ पुण्य तिथौ प्रारीप्सितामुक कर्माङ्गत्वेन चतुर्लिङ्गतो भद्रमण्डल देवतावाहन स्थापन पूजनानि करिष्ये।

**।।हस्ते अक्षतान् गृहीत्वा।।**

तद्बाह्ये पूर्वे। ॐ असिताङ्गभैरवाय नमः असिताङ्गभैरवमावाहयामि पूजयामि। (आग्ननेय्याम् ॐ रूरूभैरवाय नमः रूरूभैरवम् आ॰ पू॰। (दक्षिणे) ॐ चण्डभैरवाय नमः चण्डभैरवम् आ॰ पू॰। (नैर्ऋत्याम्) ॐ क्रोधभैरवाय नमः क्रोधभैरवम् आ॰ पू॰। (पश्चिमे) ॐ उन्मत्तभैरवाय नमः उन्मत्तभैरवम् आ॰ पू॰। (वायव्याम्) ॐ कपालभैरवाय नमः कपालभैरवम् आ॰ पू॰। (उत्तरे) भीषणभेरवाय नमः भीषणभैरवम् आ॰ पू॰। (ऐशान्याम्) ॐ संहारभैरवाय नमः संहारभैरवम् आ॰ पू॰। तद्बाह्ये पूर्वे। पुनः पूर्वादिक्रमेण ॐ अनन्ताय नमः अनन्तम् आ॰ पू॰। ॐ वासुकये नमः वासुकिम् आ॰ पू॰। ॐ तक्षकाय नमः तक्षकम् आ॰ पू॰। ॐ कुलिशायुधाय नमः कुलिशायुधम् आ॰ पू॰। ॐ कर्कोटकाय नमः कर्कोटकम् आ॰ पू॰। ॐ शङ्खपालाय नमः शङ्खपालम् आ॰ पू॰। ॐ कम्बलाय नमः कम्बलम् आ॰ पू॰। ॐ अश्वताय नमः अश्वतम् आ॰ पू॰। (ईशानेन्द्रयोर्ममध्ये) ॐ शूलाय नमः शूलम् आ॰ पू॰। (इन्द्राग्निमध्ये) ॐ चंद्रमौलिने नमः चन्द्रमौलिम् आ॰ पू॰। (अग्नियमध्ये) चन्द्रमसे नमः चन्द्रमसम् आ॰ पू॰। (यमनिर्ऋतिमध्ये) ॐ वृषभध्वजाय नमः बृषभध्वजम् आ॰ पू॰। (निर्ऋतिवरुणमध्ये) ॐ त्रिलोचनाय नमः त्रिलोचनं आ॰ पू॰। (वरुणवायुमध्ये) ॐ शक्तिधराय नमः शक्तिधरम् आ॰ पू॰। (वायुसोममध्ये) ॐ महेश्वराय नमः महेश्वरम् आ॰ पू॰। (सोमेशानयोर्मध्ये) ॐ शूलपाणये नमः शूलपाणिम् आ॰ पू॰। ततः। सर्वतोभद्रवत् देवतास्थापनम्। तदनन्तरं (उत्तरेलिङ्गे) ॐ सद्योजाताय नमः सद्योजातम् आ॰ पू॰। (प्राच्यांलिङ्गे) वामदेवाय नमः वामदेवम् आ॰ पू॰। (दक्षिणलिङ्गे) ॐ अघोराय नमः अघोरम् आ॰ पू॰। (प्रतीचीलिङ्गे) ॐ तत्पुरुषाय नमः तत्पुरुषम् आ॰ पू॰। कर्णिकायां मेरोरुपरि ॐ ईशानाय नमः ईशानम् आ॰ पू॰। मेरोः परिधिः समन्तात् चतुः पुरीभ्यो नमः चतुः पुरीः आ॰ पू॰ ततः समन्तात् ॐ ऋग्वेदाय नमः ऋग्वेदम् आ॰ पू॰। ॐ यजुर्वेदाय नमः यजुर्वेदम् आ॰ पू॰। ॐ सामवेदाय नमः सामवेदम् आ॰ पू॰। ॐ अथर्ववेदाय नमः अथर्ववेदम् आ॰ पू॰ उत्तरलिङ्गस्य दक्षिणवापीमारभ्य वामवापीपर्यन्तं श्वेताष्टवापीषु ॐ भवाय नमः भवम् आ॰ पू॰। ॐ शर्वाय नमः शर्वम् आ॰ पू॰। ॐ पशुपतये नमः पशुपतिम आ॰ पू॰। ॐ ईशानाय नमः ईशानम् आ॰ पू॰। ॐ उग्राय नमः उग्रम् आ॰ पू॰। ॐ रुद्राय नमः रुद्रम् आ॰ पू॰। ॐ भीमाय नमः भीमम् आ॰ पू॰। ॐ महते नमः महान्तम् आ॰ पू॰। तद्वापीसमीपस्थपीताष्टकोष्ठेषु चतुर्दिक्षु - ॐ भवान्यै नमः

भवानीम् आ॰ पू॰। ॐ शर्वाण्यै नमः शर्वाणीम् आ॰ पू॰। ॐ पशुपत्यै नमः पशुपतीम् आ॰ पू॰। ॐ ईशान्यै नमः ईशानीम् आ॰ पू॰। ॐ उग्रायै नमः उग्राम् आ॰ पू॰। ॐ रुद्राण्यै रुद्राणीम् आ॰ पू॰। भीमायै नमः भीमाम् आ॰ पू॰। ॐ महत्यै नमः महतीम् आ॰ पू॰। बाह्यश्वेतपरिधौ। ॐ गदायै नमः गदाम् आ॰ पू॰। ॐ त्रिशूलाय नमः त्रिशूलम् आ॰ पू॰। ॐ चतुलिङ्गतोभद्र-मण्डलस्थ देवताभ्यो नमः चतुर्लिङ्गभद्रमण्डलस्थदेवताः आवाहयामिपूजयामि ततः पूजनं कुर्यात्।

**।।त्रिचत्वारिंशद रेखात्मक द्वादशलिङ्गतोभद्र मण्डल देवता स्थापनम्।।**

**अथ संकल्प -** श्री सदाशिव प्रीत्यर्थे अमुक याग कर्मणि द्वादशलिङ्गतो भद्र मण्डल देवतावाहन स्थापनं पूजनं करिष्ये।।

(आदौ पूर्वोक्तक्रमेण सर्वतोभद्रमण्डल देवता आवाह्य) हस्ते अक्षतान् गृहीत्वा-ईशान्यादिक्रमेण प्रथम-द्वितीय-तृतीय पूर्वलिङ्गे-१ ॐ भूर्भुवः स्वः शिवाय नमः शिवमावाहयामि स्थापयामि।। भो शिव इहागच्छ इह तिष्ठ।। एवं सर्वत्र।।२ ॐ भू॰ तत्पुरुषाय नमः आ॰ स्था॰।।३ ॐ भू॰ पशुपतये नमः आ॰ स्था॰।। प्रथम-द्वितीय-तृतीयदक्षिणलिङ्गे-।।४ ॐ भू॰ उग्राय नमः आ॰ स्था॰।।५ ॐ भू॰ अघोराय नमः आ॰ स्था॰।।६ ॐ भू॰ रुद्राय नमः आ॰ स्था॰।। प्रथम-द्वितीय-तृतीय-पश्चिमलिङ्गे-।।७ ॐ भू॰ भवाय नमः आ॰ स्था॰।।८ ॐ भू॰ सद्योजाताय नमः आ॰ स्था॰।।९ ॐ भू॰ सर्वजाताय नमः आ॰ स्था।। प्रथम-द्वितीय-तृतीयोत्तरलिङ्गे-।।१० ॐ भू॰ महालिङ्गाय नमः आ॰ स्था॰।।११ ॐ भू॰ वामदेवाय नमः आ॰ स्था॰।।१२ ॐ भू॰ भीमाय नमः आ॰ स्था॰।। पूर्वेशान्यादिक्रमेण षोडशवापीषुप्रत्येकं देवतास्थापनम्-।।१३ असिताङ्गभैरवाय॰।।१४ रुरुभैरवाय॰।।१५ चण्डभैरवाय॰।।१६ क्रोधभैरवाय॰।।१७ उन्मत्तभैरवाय॰।।१८ कपालिभैरवाय॰।।१९ भीषणभैरवाय॰।।२० संहारभैरवाय॰।।२१ भवाय॰।।२२ शर्वाय॰।।२३ ईशानाय॰।।२४ पशुपते॰।।२५ रुद्राय॰।।२६ उग्राय॰।।२७ भीमाय॰।।२८ महते॰।।२९ ईशानेन्द्रयोर्मध्ये भद्रे शूलिने॰।।३० इन्द्राग्न्योर्मध्ये भद्रे-चन्द्रमौलिने॰।।३१ अग्नियमयोर्मध्ये भद्रे-चन्द्रमसे॰।।३२ यमनिर्ऋत्योर्मध्ये भद्रे-वृषभध्वजाय॰।।३३ निर्ऋतिवरुणयोर्मध्ये भद्रे-त्रिलोचनाय॰।।३४ वरुणवाय्वोर्मध्ये भद्रे-शक्तिधराय॰।।३५ वायुसोमयोर्मध्ये भद्रे-महेश्वराय॰।।३६ सोमेशानयोर्मध्ये भद्रे-शूलधारिणे॰।। अथेशानीमारभ्येशानीपर्यंतं प्रतिकोणं द्वे द्वे इत्यष्टवल्लीषु क्रमेणाष्टौ देवताः स्थापयेत्-।।३७ अनन्ताय॰।।३८ तक्षकाय॰।।३९ कुलिशाय॰।।४० कर्कोटकाय॰।।४१ शङ्खपालाय॰।।४२ कम्बलाय॰।।४३ अश्वतराय॰।।४४ पृथिव्यै॰।। आग्नेयकोणे सप्तशृङ्खलादेवताः स्थापयेत्।।४५ भूम्यै॰।।४६ हैहयाय॰।।४७ माल्यवते॰।।४८ पारिजाताय॰।।४९ दिक्पतये॰।।५० महादेवाय॰।।५१।। विष्णवे॰।। नैर्ऋत्यकोणे सप्तशृङ्खलादेवताः स्थापयेत्।।५२ माल्यवते॰।।५३

महारुद्राय।।५४ कालाग्निरुद्राय।।५५ द्वादशादित्येभ्यो।।५६ महेश्वराय।।५७ मृत्युरोगाभ्यां।।५८ वैनायक्यै।। वायव्यकोणे सप्तशृंङ्खलादेवताः स्थापयेत्-।।५९ शाकुन्तलेयाय।।६० भरताय।।६१ नलाय।।६२ रामाय।।६३ सार्वभौमाय।।६४ नैषधाय।।६५ विन्ध्याचलाय।। ईशानकोणे सप्तशृङ्खला देवताःस्थापयेत्।।६६ हेमकूटाय।।६७ गन्धमादनाय।।६८ कुलाचलाय।।६९ हिमाचलाय।।७० पृथिव्यै।।७१ अनन्ताय।।७२ कमलासनाय।। चतुर्दिक्षु खण्डेन्दुषु देवताः स्थापयेत्-।।७३ ऐशाने अश्विनीकुमाराभ्यां।।७४ आग्नेये-विश्वेभ्यो देवेभ्यो।।७५ नैर्ऋत्ये-पितृभ्यो।।७६ वायव्ये-नागेभ्यो।। तद्वहिः सत्त्वरजस्तमः-परिधिषु देवतास्थापनं पूर्वादिक्रमेण।।७७ सत्त्वपरिधौ पूर्वे-इन्द्राय।।७८ आग्नेये-अग्नये।।७९ दक्षिणे-यमाय।।८० नैर्ऋत्ये-निर्ऋतये।।८१ पश्चिमे-वरुणाय।।८२ वायव्ये-वायवे।।८३ उत्तरे-कुबेराय।।८४ ऐशाने-ईशानाय।। तद्वहिः रजःपरिधौ आयुधावाहनम्।।८५ पूर्वे-वज्राय।।८६ आग्नेये-शक्तये।।८७ दक्षिणे दण्डाय।।८८ नैर्ऋत्ये-खड्गाय।।८९ पश्चिमे-पाशाय।।९० वायव्ये अङ्कुशाय।।९१ उत्तरे-गदायै।।९२ ऐशाने-त्रिशुलाय।। तद्वहिः तमः परिधौ ऋषीन् स्थापयेत्।।९३ पूर्वे-कश्यपाय।।९४ आग्नेये-अत्रये।।९५ दक्षिणे-भरद्वाजाय।।९६ नैर्ऋत्ये-विश्वामित्राय।।९७ पश्चिमे-गौतमाय।।९८ वायव्ये-जमदग्नये।।९९ उत्तरे-वसिष्ठाय।।१०० ऐशाने-ॐ भूर्भुवः स्वः भृगवे नमः भृगुमावाहयामि स्थापयामि।। भो भृगो इहागच्छ इह तिष्ठ।। प्रतिष्ठापनम् ॐ मनोजूति।। षट्पञ्चाशदुत्तरशतसंख्यका हरिहर मण्डल देवताः सुप्रतिष्ठाः वरदाः भवत। "ब्रह्माद्यावाहितहरिहरमण्डलदेवताभ्यो नमः" इति मन्त्रेण षोडशोपचारैः (वा अन्योपचारैः) सम्पूज्य तेभ्यो पायसबलिं दद्यात्।। पूजनान्ते समर्पणम् - अनया पूजया हरिहरमण्डल देवताः प्रीयन्ताम्।।

**।।इति त्रिचत्वारिंशद्रेखात्मक हरिहरमण्डलस्थद्वादशलिंगतोभद्रमण्डल देवता स्थापनम्।।**

# ।।अथ ( ३४ ) चतुस्त्रिंशद्रेखात्मकं द्वादशलिंगतोभद्र मण्डल देवता स्थापनम्।।

मण्डले कर्णिकान्तराले मध्ये ईशानतः ईशानकोणे खण्डेन्दौ।।१ ईशान्याम् - ॐ गुरवे नमः।२ आग्नेय्याम् - गणपतये।३ नैर्ऋत्यामदुर्गायै।।४ वायव्याम् - क्षेत्रपालाय।५ भद्रमध्ये सदाशिवाय। ततोऽष्टदले पूर्वस्याम् -। पूर्वे-कालाग्निरुद्राय।७ तत्रैव-कुर्माय।८ तत्रैवमंडूकाय।९ आग्नेय्याम्-वराहाय।१० तत्रैव-अनंताय।।११ दक्षिणस्याम् पृथिव्यै।१२ तत्रैव स्कंदाय।१३ तत्रैव-सुधासिंधवे।१४ नैर्ऋत्याम्- नलाय।१५ तत्रैव-पद्माय।१६

पश्चिमायाम् - पत्रेभ्यो।१७ तत्रैव-केसरेभ्यो।।१८ तत्रैव-कर्णिकायै।।१९ वायव्याम् - सिंहासनाय।।२० तत्रैव-पद्मासनाय।।२१ उत्तरस्याम् - धर्माय।।२२ तत्रैवज्ञानाय।। २३ तत्रैव-वैराग्याय।।२४ ईशान्याम् - ऐश्वर्याय।।२५ तत्रैव-चिदाकाशाय।।२६ पद्ममध्ये-योगपीठाय।।। ततः कर्णिकोपरि पूर्वतश्चतुर्दिक्षु-पृथिव्यै। कपालाय। सप्तसरिद्भ्यो। सप्तसागरेभ्यो। (३०) कर्णिकासमीपे चत्वारि श्वेतभद्राणि सन्ति तेषु पूर्वादिचतुर्दिक्षुतत्पुरुषाय। अघोराय। सद्योजाताय। वामदेवाय। (३४) तत्समीपेकृष्णान्यष्टभद्राणि सन्ति तेषु ईशान्याद्यष्टदिक्षु-भगवत्यै। उमायै। शंकरप्रियायै। पार्वत्यै। गौर्यै। काल्यै। कौम्र्यै। विश्वंभर्यै। (४२)।। ततः कृष्णभद्राण्यधः अष्टौ रक्तभद्राणि सन्ति तेषु ईशान्याद्यष्टदिक्षु नंदिने। महाकालाय। महावृषभाय। भृंगकिरीटिने। स्कंदाय। उमापतये। चंडेश्वराय। योगसूत्राय। (५०)। चतुर्लिंगोपरि श्वेतभद्राणि सन्ति तेषु पूर्वादिचतुर्दिक्षु-धात्रे। मित्राय। यमाय। रुद्राय। (५४)।। तत्समीपे लिंगोपरि अष्टौ प्रीतभद्राणि सन्ति तेषु ईशान्याद्यष्टदिक्षु वरुणाय। सूर्याय। भगाय। विवस्वते। पुरुषोत्तमाय। सवित्रे। त्वष्ट्रे। विष्णवे। (६२)।। ततो द्वादशलिंगतोदेवतानां स्थापनम् - पूर्वे-शिवाय। तदक्षिणे-एकनेत्राय। तदक्षिणे-एकरुद्राय।। दक्षिणस्याम् - त्रिमूर्तये। तत्पश्चिमे-श्रीकंठाय। तत्पश्चिमे-वामदेवाय।। पश्चिमायाम् ज्येष्ठाय। तदुत्तरे-श्रेष्ठाय। तदुत्तरे रुद्राय।। उत्तरे-कालाय। तत्पूर्वे-कलविकरणाय। तत्पूर्वे-बलविकरणाय। (७४)।। ततः श्वेतषोडशवापीषु प्रत्येकं देवतास्थापनम् - अणिमायै। महिमायै। लघिमायै। गरिमायै। प्राप्त्यै। प्राकाम्यै। ईशितायै। वशितायै। ब्राह्मयै। माहेश्वयै। कौमार्यै। वैष्णव्यै। वाराह्यै। इंद्राण्यै। चामुण्डायै। चण्डिकायै। (९०)।। ततो वापीसमीपे अष्टरक्तभद्राणि सन्ति तेषु ईशान्याद्यष्टदिक्षु - असितांगभैरवाय। रुरुभैरवाय। चंडभैरवाय। क्रोधभैरवाय। उन्मत्तभैरवाय। कालभैरवाय। भीषणभैरवाय। संहारभैरवाय। (९८)।। ईशानाद्यष्टदिक्षु वल्लीदेवता स्थापनम् - घृताच्यै। मेनकायै। रम्भायै। उर्वश्यै। तिलोत्तमायै। सुकेशायै। मंजुघोषायै। अप्सरोभ्यो। (१०६) ततो मण्डलमध्ये परिधिसमीपे शृङ्खलादेवताः स्थापयेत् - आग्नेय्याम् - भवाय। शिवाय। रुद्राय। पशुपतये। उग्राय। भीमाय। महादेवाय। ईशानाय। अनन्ताय। वासुकये। (११६)।। नैर्ऋत्याम् - तक्षकाय। कुलीरकाय। कर्कोटकाय। शंखपालाय। कंबलाय। अश्वतराय। वैन्याय। अंगाय। हैहयाय। अर्जुनाय। (१२६)।। वायव्याम् - शाकुन्तलेयाय। भरताय। नलाय। रामाय। सार्वभौमाय। निषधाय। विंध्याचलाय। माल्यवते। पारियात्राय। सह्याय। (१३६)।। ऐशान्याम् - हेमकूटाय। गंधमादनाय। कुलाचलाय। हिमवते। रैवताय। देवगिरये। मलयाचलाय। कनकाचलाय। पृथिव्यै। अनंताय। (१४६)।। आग्नेयादिचतुर्दिक्षु खण्डेन्दुषु-अग्निकुमाराभ्यां विश्वेभ्यो देवेभ्यो। पितृभ्यो। नागेभ्यो। (१५०)।। ततो मण्डलाद्बहिः

सत्त्वपरिधौ पूर्वादिक्रमेण-इंद्राय॰ अग्नये॰ यमाय॰ निर्ऋतये॰ वरुणाय॰ वायवे॰ कुबेराय॰ ईशानाय॰ ऊर्ध्वायाम्॰ ब्रह्मणे॰ अधः- अनन्ताय॰ (१६०)।। ततो रक्तपरिधौ पूर्वादिक्रमेणवज्राय॰ शक्तये॰ दण्डाय॰ खड्गाय॰ पाशाय॰ अंकुशाय॰ गदायै॰ त्रिशूलाय॰ ऊर्ध्वायां-पद्माय॰ अधः चक्राय॰ (१७०)।। तत कृष्णपरिधौ पूर्वादिक्रमेण कश्यपाय॰ अत्रये॰ भरद्वाजाय॰ विश्वामित्राय॰ गौतमाय॰ जमदग्नये॰ वसिष्ठाय॰ अरुंधत्यै॰। पूर्वे-ऋग्वेदाय॰। दक्षिणे-यजुर्वेदाय॰। पश्चिमे-सामवेदाय॰। उत्तरे-अथर्ववेदाय नमः।। (१८२)

**।।इति ( ३४ ) चतुस्त्रिंशद्रेखात्मक द्वादशलिंगतोभद्र मण्डल देवता स्थापनम्।।**

# अथ गौरी तिलक मण्डलस्थ देवानां स्थापनं पूजनं

**अथ संकल्प -** श्री त्रिगुणात्मिका प्रीत्यर्थे सकलकामना झटिति सिद्धिअर्थम् स्थिर लक्ष्मी प्राप्त्यर्थम् गौरी तिलक मण्डलस्थ देवानाम् स्थापनम् पूजनं करिष्ये। हस्ते अक्षतान् गृहीत्वा। मध्ये कलशम्।। कलशसमीपे। पीतकोष्ठेषु चतुरो देवान् पूजयेत्। तद्यथा-महाविष्णवे नमः इति ऐशान्याम्। ॐ महालक्ष्म्यै नमः। आग्नेय्याम्। ॐ महेश्वराय नमः। नैर्ऋत्याम्। ॐ महामायायै नमः। वायव्याम्। प्रथमषडङ्गमध्ये चतुर्षुकोष्ठेषु श्वेतषु चतुर्वेदान्। ॐ ऋग्वेदाय नमः। पूर्वे। ॐ यजुर्वेदाय नमः। दक्षिणे। ॐ सामवेदाय नमः। पश्चिमे। ॐ अथर्ववेदाय नमः। उत्तरे। ततो ईशानात् पूर्व पर्य्यन्तं श्वेतकोष्ठेषु पंचदेवान् पूजयेत्।। प्रथम पूर्वे। ॐ अद्भयो नमः १। जलोद्भवाय नमः २। ॐ ब्रह्मणे नमः ३। ॐ प्रजापतये नमः ४। ॐ शिवाय नमः ५। ततः अग्निकोणे श्वेतकोष्ठयोः। ॐ अनन्ताय नमः १। ॐ परमेष्ठिने नमः २। पुनरग्निकोणे चतुष्कोष्ठेषु ॐ धात्रे नमः १। ॐ विधात्रे नमः २। ॐ अर्य्यम्णे नमः ३। ॐ मित्राय नमः ४। ततो दक्षिणेश्वेतेषु ५। ॐ वरुणाय नमः १। ॐ अंशुमते नमः २। ॐ भगाय नमः ३। ॐ इन्द्राय नमः ४। ॐ विवश्वते नमः ५। नैर्ऋत्यकोणयोः २। ॐ पूष्णे नमः १। ॐ पर्ज्जन्याय नमः २। ॐ नैर्ऋत्यकोणेश्वेतेषु ४। ॐ त्वष्ट्रे नमः १। दक्षयज्ञाय नमः २। ॐ देववसवे नमः ३। ॐ महासुताय नमः ४। पश्चिमेश्वेतेषु ५। ॐ सुधर्मणे नमः १। ॐ शङ्खपदे नमः २। ॐ महाबाहवे नमः ३। वपुष्मते नमः ४। ॐ अनन्ताय नमः ५। वायौश्वेतयोः २। ॐ महेरणाय नमः। ॐ विश्वावसवे नमः। वायौश्वेतेषु ४। ॐ सुपर्णवे नमः १। ॐ विष्टराय नमः २। ॐ रुरुदेवताय नमः ३। ॐ ध्रुवाय नमः ४। ॐ उत्तरेश्वेतेषु (५) ॐ धरायै नमः (१) ॐ सोमाय नमः (२) ॐ आपवत्साय नमः (३) ॐ नलाय नमः। (४) ॐ अनिलाय नमः (५)

ईशानेश्वेतयोः। ॐ प्रत्यूषाय नमः १। ॐ प्रभासाय नमः २। ईशान कोणेश्वेतेषु ४। ॐ आवर्ताय नमः १। ॐ सांवर्ताय नमः २। ॐ द्रोणाय नमः ३। ॐ पुष्कराय नमः ४।

**इति हृदयाङ्गपूजां शिरोङ्गशक्तिंपूजयेत् प्रथममीशाने। हरित्कोष्ठेषु ११**

ॐ ह्रीं कार्य्यै नमः १। ॐ ह्रियै नमः ॐ कात्यायन्यै नमः ३। ॐ चामुण्डायै नमः ४। ॐ महादिव्यायै नमः ५। ॐ महाशब्दायै नमः ६। ॐ सिद्धिदायै नमः ७। ॐ ह्रीं कार्य्यै नमः ८। ॐ ऐँ नमः ९। श्रीं श्रियै नमः १०। ॐ ह्रीं ह्रियै नमः ११। ईशानकोणेपीतकोष्ठषु।८ ॐ लक्ष्म्यै नमः १। ॐ श्रियै नमः २। ॐ **सुधायै** नमः ३। ॐ **मेघायै** नमः ४। ॐ प्रज्ञायै नमः ५। ॐ मत्यै नमः ६। ॐ स्वाहायै नमः १। ॐ सरस्वत्यै नमः ८। अग्निकोणेहरित्कोष्ठेषु।।११ ॐ गौर्य्यै नमः १। ॐ पद्मायै नमः २। ॐ शच्यै नमः ३। ॐ सुमेधायै नमः ४। ॐ सावित्र्यै नमः ५। ॐ विजयायै नमः ६। ॐ देवसेनायै नमः ७। ॐ स्वाहायै नमः ८। ॐ स्वधायै नमः ९। ॐ मात्रे नमः १०। ॐ गायत्र्यै नमः ११। अग्निकोणेपीतकोष्ठेषु ८। ॐ लोकमात्रे नमः १। ॐ धृत्यै नमः २। ॐ पुष्ट्यै नमः ३। ॐ तुष्ट्यै नमः ४। ॐ **आत्मदेवतायै** नमः ५। ॐ गणेश्वर्य्यै नमः ६। ॐ कुलमात्रे नमः ७। ॐ शान्त्यै नमः ८। ॐ पूवार्द्ध भागेपीतकोष्ठेषु १०। ॐ जयन्त्यै नमः १। ॐ मङ्गलायै नमः २। ॐ काल्यै नमः ३। ॐ भद्रकाल्यै नमः ४। ॐ कपालिन्यै नमः ५। ॐ दुर्गायै नमः ६। ॐ क्षमायै नमः ७। ॐ शिवायै नमः ८। ॐ धात्र्यै नमः ९। ॐ स्वाहास्वधाभ्यां नमः १०। **।।इति शिरोङ्ग पूजनम्।।**

## ।।अथ शिखाङ्गदेवपूजनम्।।

नैर्ऋत्यकोणेहरित्कोष्ठेषु ११ ॐ दीप्यमानायै नमः १। ॐ दीप्तायै नमः २। ॐ सूक्ष्मायै नमः ३। ॐ विभूत्यै नमः ४। ॐ विमलायै नमः ५। ॐ परायै नमः ६। ॐ अमोघायै नमः ७। ॐ वैधूतायै नमः ८। ॐ सर्व्वतोमुख्यै नमः ९। ॐ आनन्दायै नमः १०। ॐ नन्दिन्यै नमः ११। नैर्ऋत्यकोणेपीतकोष्ठेषु ८। ॐ शक्तयै नमः १। ॐ महासूक्ष्मायै नमः २। ॐ करालिन्यै नमः ३। ॐ भारत्यै नमः ४। ॐ ज्योतिष्मत्यै नमः ५। ॐ ब्राह्मयै नमः। माहेश्वर्य्यै नमः ७। ॐ कौमार्य्यै नमः ८। वायुकोणेहरित्कोष्ठषु ११। ॐ वैष्णव्यै नमः १। ॐ वाराह्यै नमः २। ॐ इन्द्राण्यै नमः ३। ॐ चण्डिकायै नमः ४। ॐ बुद्ध्यै नमः ५। ॐ लज्जायै नमः ६। ॐ वपुष्मत्यै नमः ७। ॐ शान्त्यै नमः ८। ॐ कान्त्यै नमः ९। ॐ रत्यै नमः १०। ॐ प्रीत्यै नमः ११। वायुकोणेपीतकोष्ठेषु ८ ॐ कीर्त्यै नमः १। ॐ प्रभायै नमः २। ॐ काम्यायै नमः ३। ॐ कान्तायै नमः ४। ॐ ऋद्ध्यै नमः ५।

ॐ दयायै नमः ६। ॐ शिवदूत्यै नमः ७। ॐ श्रद्धायै नमः ८। पश्चिमार्द्धपीतकोष्ठेषु १०। ॐ क्षमायै नमः १। ॐ क्रियायै नमः २। ॐ विद्यायै नमः ३। ॐ मोहिन्यै नमः ४। ॐ यशोवत्यै नमः ५। ॐ कृपावत्यै नमः ६। सलीलायै नमः ७। सुशीलायै नमः ८। ॐ ईश्वर्य्यै नमः ९। ॐ सिद्धेश्वर्य्यै नमः १०। **।इति शिखाङ्ग पूजा।**

## ।।अथ वचाङ्गपूजा।।

कवचाङ्गेषु ऋषीन्पूजयेत् प्रथम पूर्वे अरुणकोष्ठयोः ॐ द्वैपायनाय नमः २। ॐ भारद्वाजाय नमः। दक्षिणेऽरुणकोष्ठयोः २ ॐ गौतमाय नमः। ॐ सुमन्तवे नमः ३। पश्चिमेऽरुणकोष्ठयोः।२ ॐ देवलाय नमः १। ॐ व्यासाय नमः। उत्तरेऽरुणकोष्ठयोः २। ॐ वसिष्ठाय नमः १। ॐ च्यवनाय नमः। ईशानेकृष्णकोष्ठे।१ ॐ कण्वाय नमः १। अग्निकोणे कृ० को० मैत्रेयाय नमः २। नैर्ऋत्यकोणे कृ० को० ॐ कवये नमः ३। वा० को० कृ० कोष्ठे। ॐ विश्वामित्राय नमः ४। मध्येपीत कोष्ठेषु ८। ॐ वामदेवाय नमः १। ॐ सुमन्ताय नमः २। जैमिनये नमः ३। ॐ क्रतवे नमः ४। ॐ पिप्पलादाय नमः ५। ॐ पराशराय नमः ६। गर्गाय नमः ७। ॐ वैशम्पायनाय नमः ८। मध्येकृष्णकोष्ठेषु ईशानतः १२ ॐ दक्षाय नमः १। ॐ मार्कण्डेयाय नमः २। ॐ मृकण्डाय नमः ३। ॐ लोमशाय नमः ४। ॐ पुलहाय नमः ५। ॐ पुलस्त्याय नमः ६। ॐ वृहस्पतये नमः ७। ॐ जमदग्नये नमः ८। ॐ जामदग्न्याय नमः ९। ॐ दाल्भ्याय नमः १०। ॐ शिलोञ्छनाय नमः ११। ॐ गालवाय नमः १२। मध्येहरित्सुईशानतः १६। ॐ याज्ञवल्क्याय नमः १। ॐ दुर्वाससे नमः २। ॐ सौभरये नमः ३। ॐ जाबालये नमः ४। ॐ वाल्मीकये नमः ५। ॐ बह्चाय नमः ६। ॐ इन्द्रप्रमीतये नमः ७। ॐ देवमित्राय नमः ८। जाजलये नमः ९। शाकल्याय नमः १०। ॐ मुद्गलाय नमः ११। ॐ जातुकर्ण्याय नमः १२। ॐ बलाकाय नमः १३। ॐ कृपाचार्य्याय नमः १४। ॐ सुकर्मणे नमः १५। ॐ कौसल्याय नमः १६। **।।इति वचाङ्गपूजा।।**

## ।।अथ नेत्राङ्ग पूजा।।

ईशानकोणेऽरुणकोष्ठेषु। १२ ॐ ब्रह्माग्नये नमः १। ॐ गार्हष्पत्याग्नये नमः २। ॐ ईश्वराग्नये नमः ३। ॐ दक्षिणाग्नये नमः ४। ॐ वैष्णवाग्नये नमः ५। ॐ आहवनीयाग्नये नमः ६। ॐ सप्तजिह्वाग्नये नमः ७। ॐ इध्मजिह्वाग्नये नमः ८। ॐ प्रवर्ग्याग्नये नमः ९। ॐ वडवाग्नये नमः १०। ॐ जठराग्नये नमः ११। ॐ लौकिकाग्नये नमः १२। ॐ अग्निकोणेऽरुणकोष्ठेषु। १२ ॐ सूर्य्याय नमः १।

ॐ वेदाङ्गाय नमः २। ॐ भानवे नमः ३। ॐ इन्द्राय नमः ४। ॐ खगाय नमः ५। ॐ गभस्तिने नमः ६। ॐ यमाय नमः ७। ॐ अंशुमते नमः ८। ॐ हिरण्यरेतशे नमः ९। ॐ दिवाकराय नमः १०। ॐ मित्राय नमः ११। ॐ विष्णवे नमः १२। ॐ नैर्ऋत्यकोणेऽरुणकोष्ठेषु।१२ ॐ शम्भवे नमः १। ॐ गिरिशाय नमः २। ॐ अजैकपदे नमः ३। ॐ अहिर्बुध्न्याय नमः ४। ॐ पिनाकपाणये नमः ५। ॐ अपराजिताय नमः ६। ॐ भुवनाधीश्वराय नमः ७। ॐ कपालिने नमः ८। ॐ विशाम्पतये नमः ९। ॐ रुद्राय नमः १०। ॐ वीरभद्राय नमः ११। ॐ अश्विनीकुमाराभ्यां नमः १२। ॐ वायुकोणेऽरुण-कोष्ठेषु १२ ॐ आवहाय नमः १। ॐ प्रवहाय नमः २। ॐ उद्वहाय नमः ३। ॐ सम्वहाय नमः ४। ॐ विवहाय नमः ५। ॐ परिवहाय नमः ६। ॐ धरायै नमः ८। ॐ अद्भयो नमः ९। ॐ अग्नये नमः १०। ॐ वायवे नमः ११। ॐ आकाशाय नमः १२।

**।।इति नेत्राङ्ग पूजा।।**

**।।अथास्त्राङ्ग ऋषीन्पूजयेत्।।**

ईशानात् ईशपर्य्यन्तं वाह्यपङ्क्तौकृष्णकोष्ठेषु ४८।। ॐ हिरण्यनाभाय नमः १। ॐ पुष्पंजयाय नमः २। ॐ द्रोणाय नमः ३। ॐ शृङ्गिणे नमः ४। ॐ वादरायणाय नमः ५। ॐ अगस्त्याय नमः ६। ॐ मनवे नमः ७। ॐ कश्यपाय नमः ८। ॐ धौम्याय नमः ९। ॐ भृगवे नमः १०। ॐ वीतिहोत्राय नमः ११। ॐ मधुछन्दसे नमः १२। ॐ वीरसेनाय नमः १३। ॐ कृतवृष्णये नमः१४। ॐ अत्रये नमः १५। ॐ **मेधातिथये** नमः १६। ॐ अरिष्टनेमये नमः १७। ॐ आङ्गिरसाय नमः १८। ॐ इन्द्रप्रमदाय नमः १९। ॐ इध्मवाहवे नमः २०। ॐ पिप्पलादाय नमः २१। ॐ नारदाय नमः २२। ॐ अरिष्टसेनाय नमः २३। ॐ अरुणाय नमः २४। ॐ सनकाय नमः २५। ॐ सनन्दनाय नमः २६। ॐ सनातनाय नमः २७। ॐ सनत्कुमाराय नमः २८। ॐ कपिलाय नमः २९। ॐ कर्दमाय नमः ३०। ॐ मरीचये नमः ३१ ॐ क्रतवे नमः ३२। प्रचेतसे नमः ३३। ॐ उत्तमाय नमः ३४। ॐ दधीचे नमः ३५। ॐ श्राद्धदेवताभ्यो नमः ३६। ॐ गणदेवेभ्यो नमः ३७। ॐ विद्याधरेभ्यो नमः ३८। ॐ अप्सरेभ्यो नमः ३९। ॐ यक्षेभ्यो नमः ४०। ॐ रक्षोभ्यो नमः ४१। ॐ गन्धर्वेभ्यो नमः ४२। ॐ पिशाचेभ्यो नमः ४३। ॐ गुह्यकेभ्यो नमः ४४। ॐ सिद्धदेवताभ्यो नमः ४५। ॐ औषधीभ्यो नमः ४६। ॐ भूतग्रामाय नमः ४७। ॐ चतुर्विधभूत ग्रामाय नमः। ॐ इत्यस्त्राङ्गपूजा।। गौरीतिलकमण्डले ये देवास्तान् सर्वानावाहयामि स्थापयामि। इत्यावाह्य संस्थाप्य उपचारैः सम्पूजयेत्।

**।।इति हेमाद्रिलिखित गौरीतिलक पूजनम्।।**

# ।।अथ दुर्गा याग विधानम्।।

**''अथ दुर्गापाठस्य नव नामानि तल्लक्षणानि च,-**

रहस्योक्तानि नामानि ब्रह्मोक्तानि वदामि ते। महाविद्या महातन्त्री चण्डी सप्तशतीति च।।१।।
मृतसंजीविनी नाम पञ्चमं परिकीर्तितम्। षष्ठं चैव महा चण्डी सप्तमं रूपदीपिका।।२।।
अष्टमं तु चतुःषष्टियोगिनी नवमी परा। एतानि योऽभिजानाति नामानि नृपनन्दन।।३।।
जपं विना भवेत्तस्य चण्डिका वरदा सदा। पूर्वोक्तषड्विधानां तु स्वरूपं तत्र चोदितम्।।४।।
आद्यद्वितीयतृतीयचरितानुक्रमेण च। महाविद्या सप्तशती सर्वतन्त्रेषु गोपिता।।५।।
आद्यान्तमध्यचरितं महातन्त्रमितीरितम्। आदिमध्यान्तचारित्रक्रमाच्चण्डीमहामनुः।।६।।
मध्यमाद्यन्त चरित्रक्रमात्सप्तशतीति च। अन्त्यादिमध्यचारित्रान्मृतसंजीवनी स्मृता।।७।।
अन्त्यमध्यादिचारित्रान्महाचण्डीति कथ्यते। रूपं देहीति संयोज्य नवार्णमनुना सह।।८।।
संपुटत्वेन संयोज्य प्रतिश्लोकं जपेतथा। रूपचण्डीति सा प्रोक्ता सर्वाभीष्टफलप्रदा।।९।।
योगिनीनां चतुःषष्टियोगात्सप्तशतीमनोः। चतुःषष्ठीति सा प्रोक्ता योगसिद्धिपदायिनी।।१०।।
पराबीजसमायोगात्परा चण्डीति कथ्यते। एवं नवानां भेदानां नामानि च पृथक् पृथक् ।११।।
प्रत्येकं तैस्त्रिभिर्बीजैर्ज यादिनवनामनिः। जयां च विजयां भद्रां भद्रकालीमनन्तरम्।।१२।।
सुमुखीं दुर्मुखीं प्रज्ञां पञ्चाद्व्याघ्रमुखीं तथा। अथ सिंहमुखी दुर्गा नवदुर्गा विदुर्बुधाः।।१३।।
एवं ज्ञात्वा सप्तशतीं यो जपेत्सुसमाहितः। तस्य देवी सुप्रसन्ना सर्वाभीष्टप्रदा भवेत्।।१४।।
अथ कामनापरत्वेन चण्डीपाठसंख्या।। वाराहीतन्त्रे - **शिव उवाच**।।
चण्डीपाठफलं देवि शृणुष्व गदतो मम। एकावृत्त्यादिपाठानां यथावत्कथयामि ते।।१।।
संकल्पूर्व संपूज्य न्यस्याङ्गेषु मनून्सकृत्। पश्चाद्बलि प्रदानेन फलमाप्नोति मानवः।।२।।
उपसर्गोपशान्त्यर्थं त्रिरावृत्तिं पठेन्नरः। गृहोपशान्तौ कर्तव्या पञ्चावृत्तिर्वरानने।।३।।
महाभये समुत्पन्ने सप्तवृत्तिमुदीरयेत्। नवावृत्तौ भवेच्छान्तिर्वाजपेयफलं लभेत्।।४।।
राजवश्याय भूत्यै च रुद्रावृत्ति मुदीरयेत्। अर्कावृत्त्या काम्यसिद्धिर्वैरिहानिञ्च जायते।।५।।
मन्वावृत्त्या रिपुर्वश्यस्तथा स्त्री वशतामियात्। सौख्यं पञ्चदशावृत्त्या प्रियमाप्नोति मानवः।।६।।
कल्पावृत्त्या पुत्रपौत्रधनधान्यागमं विदुः। राजभीतिविनाशाय विपक्षोच्चाटनाय च।।७।।
कुर्यात्सप्तदशावृत्तिं तथाऽष्टादशकं प्रिये। महाऋणविमोक्षाय विंशावृत्तिं पठेन्नरः।।८।।
पञ्चविंशावर्तनाद्धि भवेद्बन्धविमोक्षणम्। संकटे समनुप्राप्ते दुश्चिकित्स्यामये सदा।।९।।
जातिध्वंसे कुलोच्छेदे आयुषो नाशमागते। वैरिवृद्धौ व्याधिवृद्धो धननाशे तथा क्षये।।१०।।
तथैव त्रिविधोत्पाते तथा चैवातिपातके। कुर्याद्यत्नाच्छतावृत्तिं ततः संपद्यते शुभम्।।११।।
विपदस्तस्य नश्यन्ति अन्ते याति परां गतिम्। जयवृद्धो शतावृत्त्या राज्यवृद्धौ सदा पठेत्।।१२।।

अथ वारादि अनुसारेण दुर्गासप्तशतीपाठ फलम् – रविवार को नवावृति का लाभ, सोमवार – एक हजार पाठ का फल, मंगलवार – सौ पाठ का फल, बुधवार, गुरु, शुक्रवार – लक्ष पाठ का फल, शनिवार के दिन पाठ करने से एक करोड़ पाठ का फल प्राप्त होता है। (मन्त्र शक्ति)

**अध्यायान्त** में इति शब्द का दोष – इति शब्दो हरेल्लक्ष्मी वधः कुल विनाशकः। अध्यायो हरते प्राणान् – मार्कण्डेयादिकं वदेत्।।

### उपरोक्त नवविधिना दुर्गापाठ भावार्थ

१. **महाविद्या** – १, २, ३ चरित्रों का पाठ विधान है। फल – रोग शत्रु नाश।
२. **महातन्त्री** – १, ३, २ चरित्रों के अनुसार विधान है। फल – बाधा रोग शत्रु नाश।
३. **चण्डी** – १, २, ३ चरित्रों का पाठ। फल – ज्ञान, विद्या, धन प्राप्ति।
४. **सप्तशती** – २, १, ३ चरित्रों का पाठ। फल – व्यापार, व्यवसाय कार्य वृद्धि।
५. **मृतसञ्जीवनी** – ३, १, २ चरित्रों का पाठ। फल – बाधा, रोगनाश, व्यापार से लाभ।
६. **महाचण्डी** – ३, २, १ चरित्रों के अनुसार फल – लक्ष्मी प्राप्ति, रोग, भय, शत्रु नाश।
७. **रूपदीपिका** – १, २, ३ चरित्रों के अनुसार फल – कार्य सिद्धि, राजभय का नाश, आरोग्य।
८. **योगिनी** – यह पाठ महादुर्लभ है। (गुरु द्वारा होता है।)
९. **पराशक्ति** – १, २, ३ चरित्रों में सौ बीज का सम्पुट होता है। पुत्र प्राप्ति के लिए क्लीं ददाति वित्तं – १२ का ४१ श्लोक या १२ का १३ श्लोक क्लीं बीज के सम्पुट से पाठ फलदायक होता है। क्लीं बीज सम्पुट से युक्त करे शीघ्र सिद्धि होती है।

## ।।अथ सार्द्ध नवचण्डी विधान।।

वाराही तन्त्र तथा रूद्र यामलान्तर्गत सार्द्ध नवचण्डी विधान इस प्रकार हैं – इस विधान को १३ पण्डित एक दिन में सम्पन्न करते हैं। १० पण्डित दुर्गापाठ करते हैं। एक पण्डित शिवपूजा सहित रूद्राभिषेक करता है। एक पण्डित बटुक पाठ तथा मन्त्र जाप करता है। एक पण्डित गणपति मन्त्र जप करता है।

**पाठ विधान** – दश पण्डित कार्यानुसार पाठ करे। गणपति मन्त्र जप करने वाला पण्डित सार्द्ध नवचण्डी का सम्पुट रहित इस प्रकार पाठ करे – आदि से चतुर्थ अध्याय का २७ मन्त्र तक पाठ करे पश्चात् ५वें अध्याय के ८वें श्लोक से पाठ प्रारम्भ कर ८२ श्लोक तक पाठ करे। पश्चात् ११वें अध्याय से सम्पूर्ण पाठ करें। यह सार्द्ध नवचण्डी विधान है।

# अथ पुरश्चरणप्रकारः दुर्गाप्रदीपे

जपेद्बिल्वं समाश्रित्य मासमेकं तु यो नरः। हुत्वाबिल्वदलैर्मासं मधुरत्रययोगतः।।१।।
हुत्वा दशाँशतो वापि कमलैः क्षीरसंयुतैः। धनदेन समां लक्ष्मीं प्राप्नुयादुत्तमां ध्रुवम्।।२।।
पाठ (वा जप) होम, तर्पण, मार्जन, ब्राह्मण भोजन इन ५ क्रियाओं को पुरश्चरण कहते हैं। पुरश्चरण करने के अनेकों स्थान और विधि दुर्गा प्रदीप में लिखे हैं। बेल के वृक्ष के नीचे एक मास दुर्गा पाठ (या सप्तशती के किसी मंत्र को कार्यानुसार) जो मनुष्य जपे और दूध सहित घी मिलाकर विल्वपत्र का हवन करे वा कमल दूध मिलाकर दशांश हवन करे तो उसको कुबेर के समान उत्तम लक्ष्मी प्राप्त होती है, इसमें संशय नहीं है।

### अथ कात्यायनीतंत्रोक्त विधि भाषा

१. प्रत्येक श्लोक के आदि अंत में 'ओं'कार कहते हुए पाठ करने से मंत्र सिद्धि।
२. प्रत्येक मंत्र के आदि में 'ॐ भूर्भुवः स्वः' कहे और मंत्र के अन्त में 'स्वः भुवः भूः ॐ' सप्तशती का १०० पाठ करने से अति शीघ्र सिद्धि।
३. 'ॐ जातवेद से' इस ऋचाका प्रत्येक मंत्र के आदि में पाठ करने से सब काम सिद्धि।
४. 'ॐ त्र्यम्बकं' इस मंत्र का जप करने से, पाठ के आदि अंत में सौ सौ बार जप करने से अथवा इस मंत्र का सम्पुट करने से अपमृत्यु से मनुष्य बचते हैं।
५. 'शूलेन पाहिनो देवि॰' इस मंत्र से सम्पुट करने से अपमृत्यु नाश होता है। केवल इस मन्त्र के लक्षायुत सहस्र शत जप करने से भी अपमृत्यु शमन होता है।
६. 'शरणा गत॰' इस मन्त्र से प्रत्येक मन्त्रों पर सम्पुट करने से सब कार्य सिद्धि।
७. 'करो तु सा नः' इस आधे मन्त्र से प्रत्येक मन्त्रों का सम्पुट करने से सब कार्य सिद्धि।
८. 'एवं देब्या वरं लब्धवा' इस मन्त्र से प्रत्येक मन्त्रों का सम्पुट करने से अभीष्ट वरप्राप्ति होती है।
९. 'दुर्गेस्मृता॰' इस मन्त्र से प्रत्येक मन्त्रों का सम्पुट करने से सर्व कार्य सिद्धि। इस मन्त्र के लक्ष वा अयुत वा सहस्र वा शत जपने से कार्य सिद्धि।
१०. 'सर्वा वाधा॰' इस मन्त्र से प्रत्येक मन्त्रों के सम्पुट से वा केवल इसी मन्त्र का लक्ष जप करने से श्लोकोक्त फल प्राप्त होता है।
११. 'इत्थं यदा यदा वाधा॰' इस मन्त्र से प्रत्येक मन्त्रों का सम्पुट करने से महामारी (हैजा) शान्ति होती है।

१२. 'ततो वव्रेनृपो राज्यं' इन दोनों मन्त्रों का एक एक लक्ष जप करने से पुनः स्वराज्य प्राप्ति होती है।

१३. 'हिनस्ति दैत्य तेजांसि' इस मन्त्र से दीप के सहित बलिदान करने से और घण्टा बन्धन करने से बालग्रहशान्ति होती है।

१४. प्रथमावृत्ति अनुलोम से द्वितीयावृत्ति विपरीत से तृतीयावृत्ति पुनः अनुलोम पाठ करने से शीघ्र कार्य सिद्धि होती है।

१५. 'दुर्गेस्मृता॰' यह आधा मन्त्र पढ़ कर फिर 'पदन्ति के यच्च दूर के इस ऋचा को फिर 'दारिद्र्य दुःख॰' इस आधे मन्त्र का लक्ष अयुत (१००००) सहस्र (१०००) शत (१००) जप करने से सर्वापत्ति दूर होती है।

१६. 'कांसोस्मितां' इस ऋग् वेदस्थ श्रीसूक्तकी ऋचा से सम्पुट करने से लक्ष्मी प्राप्त होती है।

१७. प्रत्येक मन्त्र को 'अनृणा अस्मिन्॰' इस ऋचा से सम्पुट करने से ऋण का नाश होता है।

१८. 'एव मुक्त्वा समुत्पत्य॰' इस मन्त्र से प्रत्येक मन्त्रों का सम्पुट करने से मारण प्रयोग सिद्ध होता है।

१९. 'ज्ञानिनामपिचेतांसि॰' इस श्लोक के जपमात्र से तुरन्त मोहन सिद्धि होती है और इस मन्त्र से सम्पुट करने से तो अवश्य ही शीघ्र मोहन होता है।

२०. 'रोगान शेषान्॰' इस मन्त्र के सम्पुट से वा केवल पाठ से सकल रोग शान्ति होती है।

२१. 'इत्युक्ता सा तदादेवी॰' इस मन्त्र के सम्पुट से वा पृथक जप करने से विद्या प्राप्ति होती है, और वाणी का विकार नाश होता है।

२२. 'भगवत्या कृतंसर्व॰' एक सौ बारह अक्षर का यह मन्त्र सम्पूर्ण आपत्ति दूर करने वाला और सब मनोरथ का परिपूर्ण करने वाला है।

२३. 'देवि प्रपन्नार्ति हरे॰' इससे प्रत्येक मन्त्रों का सम्पुट करने से वा लक्षायुत सहस्त्रशत कार्यानुसार जप करने से सब कार्य सिद्धि होती है। इस प्रयोग में दीप के आगे केवल नमस्कार करने से अति शीघ्र सिद्धि होती है। कामबीज से सम्पुटित करके प्रतिदिन तीन आवृत्ति करे ४१ दिन पर्यन्त, तो सर्व कार्य सिद्धि होती है।

२४. उक्त रीति से २१ दिन बारह २ आवृत्ति पाठ करने से वशीकरण होता है।

२५. मायावीज से सम्पुटित करने से फट् पल्लव के सहित ७ दिन तेरह तेरह आवृत्ति करने से उच्चाटनसिद्धि होती है।

२६. उसी के सदृश ४ दिन ग्यारह ग्यारह आवृत्ति करने से सब उपद्रव का शमन होता है।

२७. श्रीं बीज से सम्पुटित करके पन्द्रह २ आवृत्ति ४९ दिन में करने से लक्ष्मी प्राप्ति।
२८. प्रत्येक श्लोक वाग्बीज से सम्पुटित करके १०० आवृत्ति करने से विद्या प्राप्ति होती है। इनके अतिरिक्त सम्पुट करने के अनेकों मन्त्र हैं गुरुजी से जानना चाहिये।

सप्तशती पाठ के मन्त्रों के पूर्व एक बार अन्य मन्त्र के पाठ से पल्लव पाठ होता है। और सम्पुट दो प्रकार का होता है। जिस मन्त्र से सम्पुट करना हो उसका अध्याय के आदि में अन्त में एक २ बार उच्चारण करे। और दूसरा सम्पुट सब श्लोकों के बाद दो दो बार और आदि में एक बार अन्त में एक बार मन्त्र पढ़ा जाता है यदि सप्तशती के मन्त्रों के ही अन्तर्गत सम्पुट करने वाला मन्त्र हो तो जहाँ सम्पुट करने वाला मन्त्र का खास स्थान है वहाँ उसको पाँच बार पढ़े।

## ।।अथ शतचण्डी सहस्र चण्डी विधानं।।

शतचण्डी विधानं तु प्रवक्ष्ये प्रीतयेनृणाम्। नृपोपद्रवआपन्ने दुर्भिक्षे भूमिकम्पने।।१।।
अतिवृष्ट्या मनावृष्टौ परचक्रभयेक्षये।। सर्वे विघ्नाविनश्यन्ति शतचण्डी विधौकृते।।२।।
रोगाणां वैरिणांनाशो धनपुत्रसमृद्धयः। शंकरस्य भवान्या वा प्रासाद निकटे शुभम्।।३।।
मण्डपं द्वारेवद्याढ्यं कुर्यात्सध्वजतोरणम्।। तत्रकुण्डं प्रकुर्वीत प्रतीच्यां मध्यतोऽपिवा।।४।।
स्नात्वा नित्यक्रियां कृत्वा वृणुयाद्दश वाडवान्।। जितेन्द्रियान्सदाचारान् कुलीनान्सत्यवादिनः।।५।।
व्युत्पन्नांश्चण्डिकापाठरतांल्लज्जादयावतः।। मधुपर्कविधानेन स्वर्णवस्त्रादिदानतः।।६।।
जपार्थमासनं मालां दद्यात्तेभ्योऽपि भोजनम्।। ते हविष्यान्नमश्नन्तो मन्त्रार्थगतमानसाः।।७।।
भूमौ शयानाः प्रत्येकं जपेयुश्चण्डिकास्तवम्।। मार्कण्डेयपुराणोक्तं दशकृत्वः सचेतसः।।८।।
नवार्णं चण्डिकामन्त्रं जपेयुश्चायुतं पृथक्।। (पृथक् सम्पुटीकरणादिति शेषः। प्रत्येकंब्राह्मणेनायुतं १०,००० जपःकार्य्यः) यजमानः पूजयेश्च कन्यानां नवकं शुभम्।।९।।
द्विवर्षाद्यादशाब्दान्ताःकुमारीः परिपूजयेत्।। नाधिकाङ्गींनहीनाङ्गींकुष्ठिनींच ब्रणाङ्किितां।।१०।।
अन्धां काणां केकरां च कुरूपां लोमयुक्तनुम्। दासी जातांरोगयुक्तांदुष्टां कन्यां न पूजयेत।।११।।
विप्रजामिष्टसंसिद्ध्यै यशसे क्षत्रियोद्भवाम्। वैश्यजां धनलाभाय पुत्राप्त्यै शूद्रजां यजेत्।।१२।।
द्विवर्षा सा कुमार्युक्ता त्रिमूर्तिर्हायनत्रिका।। चतुरब्दा तु कल्याणी पंचवर्षा तु रोहिणी।।१३।।
षडब्दा कालिका प्रोक्ता चण्डिका सप्त हायनी।। अष्टवर्षा शाम्भवी स्याद् दुर्गा तु नवहायनी।।१४।।
सुभद्रा दशवर्षोक्तास्ता मन्त्रैः परिपूजयेत्।। एकाद्वायाः प्रीत्यभावोरुद्राद्वा तुविवर्जिताः।।१५।।
तासामावाहने मंत्राः प्रोच्यंते शङ्करोदिताः।। मन्त्राक्षरमयीं लक्ष्मीं मातृणां रूपधारिणीम्।।१६।।
नवदुर्गात्मिकां साक्षात्कन्यामावाहयाम्यहम्।। कुमारिकादिकन्यानांपूजामन्त्रान्ब्रुवेधुना।।१७।।

जगत्पूज्येजगद्वन्द्ये सर्वदेव स्वरूपिणि।। पूजां गृहाण कौमारि जगन्मातर्नमोस्तुते।। त्रिपुरां त्रिपुराधारांत्रिवर्ग ज्ञानरूपिणीम्।।१८।। त्रैलोक्यवन्दितां देवीं त्रिमूर्ति पूजयाम्यहम्।।१९।।
कालात्मिकां कलातीतां कारुण्यहृदयां शिवाम्।। कल्याणजननीं देवीं कल्याणीं पूजयाम्यहम्।।२०।।
अणिमादिगुणाधारामकाराद्यक्षरात्मिकाम्।। अनन्तशक्तिकां लक्ष्मीं रोहिणीं पूजयाम्यहम्।।२१।।
कामचारां शुभांकान्तां कालचक्रस्वरूपिणीम्।। कामदां करुणोदारां कालिकां पूजयाम्यहम्।।२२।।
चण्डवीरां चण्डमायां चण्डमुण्डप्रभंजनीम्।। पूजयामि महा देवीं चण्डिकां चण्डविक्रमाम्।।२३।
सदानन्दकरीं शान्तां सर्वदेवनमस्कृताम्।। सर्वभूतात्मिकां देवीं शाम्भवीं पूजयाम्यहम्।।२४।।
दुर्गमे दुस्तरे कार्ये भवार्णव विनाशिनीम्।। पूजयामि सदा भक्त्या दुर्गां दुर्गार्तिनाशनीम्।।२५।।
सुंदरीं स्वर्णवर्णाभां सुखसौभाग्यदायनीम्।। सुभद्रजननीं देवीं सुभद्रां पूजयाम्यहम्।।२६।।
एतैर्मन्त्रैः पुराणोक्तैःस्नातां कन्यां प्रपूजयेत्।। गन्धैः पुष्पै र्भक्ष्यभोज्यैर्वस्त्रैराभराणैरपि।।२७।।
वेद्यां विरचिते रम्ये सर्व्वतोभद्रमंडले।। घटं संस्थाप्य विधिवत्तत्रावाह्याच्चर्चये च्छिवाम्।।२८।।
तदग्रे कन्यकाश्चापि पूजयेद्ब्राह्मणानपि।। उपचारैस्तु विविधैःपूर्वोक्त वरणान्यपि।।२९।।
एवं चतुर्दिनं कृत्वा पञ्चमेहोममाचरेत्।। पायसान्नैस्त्रिमध्वक्तै र्द्राक्षारम्भाफलैरपि।।३०।।
मातुलिङ्गै रक्षुखण्डैर्नारिकेलैः पुरैस्तिलैः।। जातीफलैराम्रफलैरन्यैर्मधुरवस्तुभिः।।३१।।
सप्तशत्यादशावृत्याप्रतिश्लोकं हुतं चरेत्।। अयुतंचनवार्णेन स्थापिताग्नौविधानतः।।३२।।
कृत्वावरणदेवानां होमं तन्नाममंत्रतः।। कृत्वा पूर्णाहुतिं सम्यग्देवमग्निं विसृज्य च।।३३।।
अभिषिंचेच्चयष्टारं विप्रौघः कलशोदकैः।। निष्कं सुवर्णमथवा प्रत्येकं दक्षिणां दिशेत्।।३४।।
भोजयेच्चशतंविप्रान्भक्ष्यभोज्यैः पृथग्विधैः।। तेभ्योपिदक्षिणां दत्वा गृह्णीयादाशिषस्ततः।।३५।।
एवंकृतेजगद्वश्यं सर्वे नश्यन्त्युपद्रवाः।। राज्यंधनंयशःपुत्रा निष्टमन्यल्लभेतसः।।३६।।
एतद्दशङ्गुणर्याच्चण्डी साहस्रजं विधिम्।। विद्यामतः सदाचारान्ब्राह्मणान्वृणुयाच्छतम्।।३७।।
प्रत्येकं चण्डिकापाठान्विदध्युस्तेदिशामितान्।। अयुतं प्रजपेयुस्ते प्रत्येकन्नववर्णकम्।।३८।।
पूर्वोक्ताः कन्याकाःपूज्याः पूर्वमन्त्रैः सतंशुभाः।। एवं दशाहं सम्पाद्यहोमङ्कुर्युः प्रयत्नतः।।३९।।
सप्तशत्याः शतावृत्या प्रतिश्लोकं विधानतः।। लक्षसङ्ख्यं नवार्णेन पूर्वोक्तैर्द्रव्यसंचयैः।।४०।।
होतृभ्यो दक्षिणां दत्वा पूर्वोक्तान्भोजयेद्विजान्।। सहस्रसम्मितान्साधू न्देव्याराधनतत्परान्।।४१।।
एवं सहस्रसंख्या के कृतेचण्डीविधौनृणाम्।। सिध्यत्यभीप्सितं सर्वं दुखौघश्च विनश्यति।।४२।।
मारीदुर्भिक्षरोगाद्या नश्यन्तिव्यसनोच्चयाः।। नेमंविधिंवदेत् दुष्टे खले चौरे गुरुद्रुहि।।४३।।
साधौजितेन्द्रियेदान्ते वदेद्विधिमिमंपरम्।। एवं साचंडिकातुष्टावक्तृञ्च्छ्रोतृंश्चरक्षति।।४४।।

## दुर्गोपासनाकल्पद्रुमाध्याय अनुसारेण चण्डिका याग

**विषय –** त्रिपञ्च सप्तभिर्वाऽपि नवैकादशभिस्तथा। अदीर्घ दिवसैः क्षिप्रं विदध्याचण्डिका मखम्।।

।।इति दुर्गा याग विधानम्।।

# ।।श्री जगदम्बा पूजन प्रयोगः।।

**अथ सङ्कल्पः** - देश कालौ सङ्कीर्त्य-मम सकुटुम्बस्य सपरिवारस्य सर्वापच्छान्तिपूर्वकं दीर्घायुर्विपुल धन धान्य पुत्र-पौत्राद्यनवच्छिन्न संतति वृद्धि स्थिर लक्ष्मी कीर्ति लाभ शत्रु पराजय सदभीष्ट सिद्ध्यर्थं भूत प्रेत पिशाचादि भय निवृत्यर्थं राजभय दस्युभयादि निवृतये च श्री त्रिगुणात्मिका दुर्गा देवता प्रीति कामनया ममाशेष पापक्षयार्थं धर्मार्थ काममोक्ष पुरुषार्थ सिद्ध्यर्थं श्री भवानी महाकाली महालक्ष्मी महा सरस्वत्यादि त्रिगुणात्मिकायाः अनुग्रह सदैव निरन्तर प्राप्त्यर्थम् (अमुक कामनया) नवचण्डी शतचण्डीं सहस्रचण्डीं याग ब्राह्मण द्वारा अहं कारयिष्ये (वा अहं करिष्ये)।।

पुनः सङ्कल्पमादाय - तदङ्गतयायाग निर्विघ्नता पूर्वकं सिद्ध्यर्थम् श्री गणेशाम्बिका वरुणार्चनम् पुण्याहवाचनं षड्विनायक मातृकार्चनम् वसोर्धारामायुष्यमन्त्र जपं नांदीश्राद्धमाचार्यादि वरणं च करिष्ये।।

**अथाचार्य** - देश कालौ सङ्कीर्त्य यजमानेन वृतोऽहमाचार्य कर्म करिष्ये इति संकल्प।

**तत्पश्चात्** - आसन शुद्धि, गौर सर्षपान्विकीर्य एवं योगिनी क्षेत्रपाल भैरव, वास्तुमण्डल, नवग्रह इत्यादि पूजन स्थापना करे।

सर्वतोभद्रमण्डलं विलिख्य तत्र ब्रह्मादि देवताः संस्थाप्य भूरसिरित्यादिमंत्रैः कलशं संस्थाप्यः पूजनम् कुर्यात् ततः कलशे देवताः स्मरेत्।। तदुपरि पूर्णपात्रं निधाय वस्त्रे भूर्जपत्रे वा ताम्रादि पत्रे यंत्रं लिखेत।। तद्यथा-

मध्ये बिन्दुं त्रिकोण तद्वहिः षट्कोणं तब्द्बाह्ये वृतं तब्द्बाह्येष्टौ दलानि तदुपरि वृतं तदुपरि चतुर्विंशति पत्राणि तद्वाह्ये चतुर्द्वारं चतुरस्त्रत्रयमिति।। एवं यन्त्रं विलिख्य तत्राष्टादश भुजाम् अष्टभुजाम् वा सिंहारूढां सौवर्णीं देवी मूर्तिमग्न्युतारण प्राण प्रतिष्ठा पूर्वकं प्रतिष्ठाप्य पूजयते।। (भूर्जपत्र पर लिखे हुए यन्त्र का अग्न्युतारण नहीं करे।)

**अथ देवी पूजा प्रयोग - मूल मन्त्र** - 'ॐ ऐं ह्रीं क्लीं चामुण्डायै विच्चे' से आचमन प्राणायाम करे।

**संङ्कल्प** - श्री महाकाली महालक्ष्मी महासरस्वती त्रिगुणात्मिकाम्बिका देवता प्रसन्नार्थम् सकल मनोरथ कार्य सिद्ध्यर्थम् पात्रासादनम् पीठ पूजां यन्त्र देवता पूजनं जगदम्बिका यथा मिलितोपचारै द्रव्येण पूजनमहं करिष्ये।

तदङ्गतया पूजनाधिकारार्थं एकादश न्यासांश्च करिष्ये।

**आसन पूजनम्** - आसन के नीचे जल से त्रिकोण, उसमें ॐ कूर्माय नमः। ॐ ह्रीं आधारशक्तिकमलासनाय नमः। ॐ पृथिव्यै नमः - ऐसा गंधाक्षत पूजन करें। वहां कुशासन, उसके ऊपर मृगचर्म, उसके ऊपर कंबल-कोशेय रखें। ॐ अनन्तासनाय नमः।

ॐ विमलासनाय नमः। ॐ पद्मानसनाय नमः। स्वस्तिकासन, पद्मासन आदि सुखासन में बैठकर आसनपूजनम् - पृथ्वीति मंत्रस्य मेरुपृष्ठऋषिः कूर्मो देवता सुतलं छन्दः आसने विनियोगः। ॐ पृथ्वि त्वया. पञ्चोपचार से पूजा करे।
(अनेक प्रकार से न्यास, देह शुद्धि, प्राण प्रतिष्ठा इत्यादि का विधान है। परन्तु अत्यधिक विस्तार के भय से केवल एकादश न्यास व देवीकला मातृका न्यास लिखा है। )

# एकादशन्यासः

ॐ अस्य श्री नवार्णमन्त्रस्य ब्रह्मविष्णुरुद्राऋषयः गायत्र्युष्णिगनुष्टुप्छन्दांसि श्रीमहाकाली महालक्ष्मी महासरस्वत्यो देवताः नन्दाशाकम्भरीभीमाः शक्तयः रक्तदन्तिकादुर्गाभ्रामर्यो बीजानि अग्निवायुसूर्यास्तत्त्वानि सर्वाभीष्टसिद्ध्यर्थं श्रीजगदम्बिकापूजाङ्गत्वेन न्यासे विनियोगः।। ऋष्यादिन्यासः -ब्रह्मविष्णुरुद्रऋषिभ्यो नमः शिरसि। गायत्र्युष्णिगनुष्टुप्छन्दोभ्यो नमः मुखे।। श्रीमहाकाली महालक्ष्मी महासरस्वती देवताभ्यो नमः हृदि।। नंदाशाकम्भरी भीमाशक्तिभ्यो नमो दक्षिणस्तने।। रक्तदन्तिका दुर्गाभ्रामरी बीजेभ्यो नमो वामस्तने।। अग्निवायुसूर्येभ्यस्तत्त्वेभ्यो नमः नाभौ। इति ऋष्यादिन्यासः मूलेन (ऐं ह्रीं क्लीं चामुंडायै विच्चे) इति करौ संशोधयेत्।।
**अथैकादशन्यासाः दुर्गोपासनाकल्पस्थाः** ।। (१) (प्रथमो मातृकान्यासो देवसारूप्यदः स्मृतः।। स च अङ्गुष्ठानामिकामेलनरूपया तत्त्वमुद्रया सर्वत्र न्यसेत्।। सर्वत्रादौ प्रणवोच्चारः) ह्रीं अं नमो मूर्ध्नि। आं नमो ललाटे। इं नमो दक्षिणनेत्रे। ईं नमो वामनेत्रे। उं नमो दक्षिणकपोले। ॐ नमो वामकपोले। ऋं नमो दक्षिणकर्णे। ॠं नमो वामकर्णे। लृं नमो दक्षनासापुटे। ॡं नमो वामनासापुटे। एं नमः ऊर्ध्वोष्ठे। ऐं नमः अधरोष्ठे। ओं नमः ऊर्ध्वदन्तपंक्तौ। औं नमः अधोदंतपंक्तौ। अं नमः जिह्वायाम्। अः नमस्तालुनि। कं नमो दक्षिणबाहुमूले। खं नमो दक्षिणपकूर्परे। गं नमो दक्षिणमणिबन्धे। घं नमो दक्षिणाङ्गुलिमूले। ङं नमो दक्षिणाङ्गुल्यग्रे। चं नमो वामबाहुमूले। छं नमो वामकूर्परे। जं नमो वाममणिबन्धे। झं नमो वामाङ्गुलिमूले। ञं नमो वामाङ्गुल्यग्रे। टं नमो दक्षिणपादमूले। ठं नमो दक्षिणजानुनि। डं नमो दक्षिणपादगुल्फे। ढं नमो दक्षिणपादांगुलिमूले। णं नमो दक्षिणपादांगुल्यग्रे। तं नमो वामपादमूले। थं नमो वामजानुनि। दं नमो वामपादगुल्फे। धं नमो दक्षिणपादाङ्गुलिमूले। नं नमो वामपादाङ्गुल्यग्रे। पं नमो दक्षिणपार्श्वे। फं नमो वामपार्श्वे। बं नमो पृष्ठे। भं नमो नाभौ। मं नमः उदरे। यं नमस्त्वचि। रं नमः असृजि। लं नमो मांसे। वं नमः स्नायुषु। शं नमः अस्थिनि। षं नमः मज्जायाम्। सं नमः मेदसि। हं नमः शुक्रे। क्षं नमः सर्वत्र। (इति मातृकान्यासः प्रथमः येन मांत्रिकः साङ्गवेदसमो भाति)।।१।।

**( द्वितीयः सारस्वतो न्यासः )** ।। ॐ ऐं ह्रीं क्लीं कनिष्ठिकाभ्यां नमः। ॐ ऐं ह्रीं क्लीं अनामिकाभ्यां नमः। ॐ ऐं ह्रीं क्लीं मध्यमाभ्यां नमः। ॐ ऐं ह्रीं क्लीं तर्जनीभ्यां नमः। ॐ ऐं ह्रीं क्लीं अङ्गुष्ठाभ्यां नमः। ॐ ऐं ह्रीं क्लीं करतलाभ्यां नमः। ॐ ऐं ह्रीं क्लीं करपृष्ठाभ्यां नमः। ॐ ऐं ह्रीं क्लीं कूर्पराभ्यां नमः। ॐ ऐं ह्रीं क्लीं मणिबंधाभ्यां नमः। ॐ ऐं ह्रीं क्लीं हृदयाय नमः। ॐ ऐं ह्रीं क्लीं शिरसे नमः। ॐ ऐं ह्रीं क्लीं शिखायै नमः। ॐ ऐं ह्रीं क्लीं कवचाय नमः। ॐ ऐं ह्रीं क्लीं नेत्रद्वयाय नमः। ॐ ऐं ह्रीं क्लीं अस्त्राय नमः। ॐ ऐं ह्रीं क्लीं पूर्वायै नमः। ॐ ऐं ह्रीं क्लीं अग्नये नमः। ॐ ऐं ह्रीं क्लीं दक्षिणायै नमः। ॐ ऐं ह्रीं क्लीं निर्ऋतये नमः। ॐ ऐं ह्रीं क्लीं पश्चिमायै नमः। ॐ ऐं ह्रीं क्लीं वायवे नमः। ॐ ऐं ह्रीं क्लीं उत्तरायै नमः। ॐ ऐं ह्रीं क्लीं ईशानाय नमः। ॐ ऐं ह्रीं क्लीं ऊर्ध्वायै नमः। ॐ ऐं ह्रीं क्लीं अधस्तात् नमः। (इति द्वितीयः सारस्वतो न्यासः येन दुरितं जाड्यं वाक्पापसञ्चयश्च विलयं याति)।।२।।

**( तृतीयो मातृगणन्यासः )** ।।ब्रह्माणी मां पूर्वतः पातु। माहेश्वरी माम् आग्नेयां पातु। कौमारी मां दक्षिणे पातु। वैष्णवी मां नैर्ऋत्यां पातु। वाराही मां पश्चिमे पातु। नारसिंही मां वायव्यां पातु। इन्द्राणी माम् उत्तरे पातु। चामुण्डा माम् ईशान्यां पातु। व्योमेश्वरी माम् ऊर्ध्वं पातु। सप्तद्वीपेश्वरी मां भूमौ पातु। ह्रीं नागेश्वरी अधः मां पातु।। (इति मातृगणन्यासस्त्रैलोक्यविजयप्रदस्तृतीयः)।।३।।

**( चतुर्थो न्यासः )** कमलांकुशमंडिता नंदजा पूर्वांगं मे पातु।। खड्गपात्रधरा रक्तदंतिका दक्षिणांगं मे पातु।। पुष्पपल्लवसंयुता शाकंभरी पश्चिमांगं मे पातु।। धनुर्बाणकरा दुर्गा वामांगं मे पातु।। शिरः पात्रकरा भीमा मस्तकाच्चरणावधि मां पातु। चित्रकांतिभृद्भ्रामरी पादादिमस्तकांतं मे पातु। इति जरामृत्युहरो नंदजादिन्यासश्चतुर्थः।।४।।

**( पंचमो न्यासः )** ऐं पादादिनाभिपर्यंतं ब्रह्मा मां पातु। श्रीं नाभेर्विशुद्धिपर्यंतं जनार्दनो मां पातु। हंसौं विशुद्धेः ब्रह्मरंध्रांतं रुद्रो मां पातु। ऐं हंसो पदद्वयं मे पातु। श्रीं वैनतेयः करद्वयं मे पातु। हंसौं वृषभश्चक्षुषी मे पातु। ह्रीं गजाननः सर्वांगं मे पातु। ह्रीं आनंदमयो हरिः परापरौ देहभागौ मे पातु। (इति सर्वकामजो ब्रह्मादिन्यासः पंचम।।५।।

**( षष्ठो न्यासः )** ह्रीं अष्टादशभुजा लक्ष्मीर्मध्यभागं मे पातु। ऐं अष्टभुजा महासरस्वती ऊर्ध्वभागं मे पातु। दशभुजा महाकाली अधोभागं मे पातु। क्ष्रौं सिंहो हस्तद्वयं मे पातु। ऐं परहंसोऽक्षियुगं मे पातु। महिषारूढो यमः पदद्वयं मे पातु। हंसौं महेशश्चंडिकायुक्तः सर्वांगं मे पातु (इति महालक्ष्म्यादिन्यासः सद्गतिप्रदः षष्ठः।।६।।

**( सप्तमो न्यासः )** ऐं नमो ब्रह्मरंध्रे। ह्रीं नमो दक्षिणनेत्रे। क्लीं नमो वामनेत्रे। चां नमो दक्षिणकर्णे। मुं नमो वामकर्णे। डां नमो दक्षिणनासापुटे। यैं नमो वामनासापुटे। विं नमो मुखे। च्चें नमो गुह्ये। इति मूलाक्षरन्यासो रोगक्षयकरः सप्तमः।।७।।

**( अष्टमो न्यासः )** च्वें नमो गुह्ये। विं नमो मुखे। यैं नमो वामनासापुटे। डां नमो दक्षिणनासापुटे। मुं नमो वामकर्णे। चां नमो दक्षिणकर्णे। क्लीं नमो वामनेत्रे। ह्रीं नमो दक्षिणनेत्रे। ऐं नमो ब्रह्मरंध्रे। (इति विलोमाक्षरन्यासः सर्वदुःखनाशकोऽष्टमः।।८।।

**( नवमो न्यासः )** मूलमुच्चार्य मस्तकाच्चरणांतं चरणान्मस्तकांतं अष्टवारं व्यापकं कुर्यात्।। स यथा-प्रथमं पुरतो मूलेन मस्तकाच्चरणावधिः।।१।। ततश्चरणान्मस्तकावधि मूलोच्चारेण व्यापकम्।।२।। एवं दक्षिणतः पश्चाद्वामभागे चेति प्रतिदिग्भागेऽनुलोम- विलोमतया द्विर्द्विरिति अष्टवारं व्यापकं कुर्यात्।। (इति देवताप्राप्तिकरो मूलव्यापको नवमः।।९।।

**( दशमे न्यासः )** मूलमुच्चार्य हृदयाय नमः।। एवं प्रत्यंगं सर्वमूलमुच्चार्य षडंगेषु न्यसेत्।। (इति मूलषडंगन्यासस्त्रैलोक्य वशकरो दशमः।।१०।।)

**( एकादशो न्यासः**: खड्गिनी शूलिनी घोरा गदिनी चक्रिणी तथा ।।शंखिनी चापिनी बाणभुशुंडीपरिघायुधा।।१।। सौम्यासौम्यतराऽशेषसौम्येभ्यस्त्वतिसुंदरी। परापराणां परमा त्वमेव परमेश्वरी।।२।। यच्च किंचित्क्वचिद्वस्तु सदसद्वाखिलात्मिके।। तस्य सर्वस्य या शक्तिः सा त्वं किं स्तूयसे मया।।३।। यया त्वया जगत्स्रष्टा जगत्पात्यत्ति यो जगत्।। सोऽति निद्रावशं नीतः कस्त्वां स्तोतुमिहेश्वरः।।४।। विष्णु शरीरग्रहणमहमीशान एव च।। कारितास्ते यतोऽतस्त्वां कः स्तोतुं शक्तिमान्भवेत्।।५।। आद्यं वाग्बीजं ऐं कृष्णतरं ध्यात्वा सर्वांगे विन्यसेत्।। शूलेन पाहि नो देवि पाहि खड्गेन चांबिके।। घंटास्वनेन नः पाहि चापज्यानिःस्वनेन च।।१।। प्राच्यां रक्ष प्रतीच्यां च चंडिके रक्ष दक्षिणे।। भ्रामणेनात्मशूलस्य उत्तरस्यां तथेश्वरि।।२।। सौम्यानि यानि रूपाणि त्रैलोक्ये विचरंति ते।। यानि चात्यर्थघोराणि तै रक्षास्माँस्तथा भुवम्।।३।। खड्गशूलगदादीनि यानि चास्त्राणि तेऽम्बिके।। करपल्लवसंगीनि तैरस्मान्रक्ष सर्वतः।।४।। द्वितीयं मायाबीजं ह्रीं सूर्यसदृशं ध्यात्वा सर्वांगे विन्यसेत्।। सर्वस्वरूपे सर्वेशे सर्वशक्ति-समन्विते।। भयेभ्यस्त्राहि नो देवि दुर्गे देवि नमोऽस्तु ते।।१।। एतत्ते वदनं सौम्यं लोचनत्रयभूषितम्।। पातु नः सर्वभूतेभ्यः कात्यायनि नमोऽस्तु ते।।२।। ज्वालाकरालमत्युग्रमशेषासुरसूदनम्।। त्रिशूलः पातु नो भीतेर्भद्रकालि नमोस्तु ते।।३।। हिनस्ति दैत्येतेजांसि स्वनेनापूर्य या जगत्।। सा घंटा पातु नो देवि पापेभ्योऽनः सुतानिव।।४।। असुरासृग्वसापंकचर्चितस्ते करोज्ज्वलः।। शुभाय खड्गो भवतु चंडिके त्वां नता वयम्।।५।। तृतीयं कामबीजं क्लीं स्फटिकाभं ध्यात्वा सर्वांगे विन्यसेत्।। (इति सूक्तादिबीजत्रयन्यासः।। सर्वानिष्टहरः सर्वाभीष्टदः सर्वरक्षाकरश्चैकादशो न्यासः।।) **इत्यैकादशन्यसप्रयोगः।।**

# अथ देवीकलामातृकान्यासः

अस्य श्रीदेवीकलामातृकान्यासस्य प्रजापतिर्ऋषिः गायत्रीछंदः श्रीमातृकाशारदा देवता हलो बीजानि स्वराः शक्तयः सप्तशतीपाठ जपादौ (होमादौ च) मातृकान्यासे विनियोगः।। प्रजापतिऋषये। शिरसि। गायत्री छंदसे। मुखे। शारदादेवतायै।हृदि। हल्बीजेभ्यो। गुह्ये। स्वरशक्तिभ्यो। पादयोः। विनियोगाय। सर्वांगे। अं आं हृदयाय।। इं ईं शिरसे।। उं ऊं शिखायै।। एं ऐं कवचाय।। ओं औं नेत्रत्रयाय।। अं अः अस्त्राय।। एवं करांगन्यासं कृत्वा ध्यायेत्- शंखं चक्राब्जपरशु कपालाक्षकमालिकाः। पुस्तकातनुकुंभौ च त्रिशूलं दधतीं करैः।। सितपतीसितश्वेतरक्तवर्णैस्त्रिलोचनैः। पंचास्यसंयुतां चंद्रसकान्तिं शारदां भजे।। इति ध्यात्वा मातृका न्यसेत्।। ह्रीं अं निवृत्यै। ललाटे। आं प्रतिष्ठायै। मुखवृत्ते। इं विद्यायै। दक्षनेत्रे। ईं शान्त्यै। वामनेत्रे। उं धरायै। दक्षकर्णे। ऊं दीपिकायै। वामकर्णे। ऋं रेचिकायै। दक्षनासापुटे। ॠं मोचिकायै। वामनासापुटे। लृं परायै। दक्षकपोले। लृं सूक्ष्मायै। वामकपोले। एं सूक्ष्मामृतायै। ऊर्ध्वोष्ठे। ऐं ज्ञानामृतायै। अधरोष्ठे। ओं आप्यायिन्यै। ऊर्ध्वदन्तपंक्तौ। औं व्यापिन्यै। अधोदन्तपंक्तौ। अं व्योमरूपायै। जिह्वायाम्। अः अनन्तायै। कंठे। कं सृष्टयै। दक्षबाहुमूले। खं ऋद्ध्यै। दक्षकूर्परे। गं स्मृत्यै।दक्षमणिबंधे। घं मेधायै।दक्षहस्ताङ्गुलिमूले। ङं श्रियै। दक्षहस्तांगुल्यग्रे। चं लक्ष्म्यै। वामबाहुमूले। छं द्युत्यै। वामकूर्परे। जं स्थिरायै। वाममणिबंधे। झं स्थित्यै। वामहस्तांगुलिमूले। ञं सिद्ध्यै।वामहस्तांगुल्यग्रे। टं जरायै। दक्षपाद मूले। ठं पालिन्यै।दक्षजानुनि। डं क्षान्त्यै।दक्षगुल्फे। ढं ईश्वर्यै। दक्षपादांगुलि मूले। णं रत्यै।दक्षपादांगुल्यग्रे। तं कामिकायै। वामपादमूले। थं वरदायै। वामजानुनि। दं आल्हादिन्यै।वामगुल्फे। धं प्रीत्यै।वामपादांगुलिमूले। नं दीर्घायै। वामपादांगुल्यग्रे। पं तीक्ष्णायै।दक्षपार्श्वे। फं रौद्ये।वामपार्श्वे। बं भयायै।पृष्ठे। भं निद्रायै।नाभौ। मं तंद्रिकायै।जठरे। यं क्षुधायै। हृदि। रं क्रोधिन्यै। दक्षांसे। लं क्रियायै। ककुदि। वं उत्कायै। वामांसे। शं मृत्युकायै। हृदयादिक्षहस्तान्तम्। षं पीतायै। हृदयादिवामहस्तान्तम्। सं श्वेतायै। हृदयादिदक्षपादान्तम्। हं अरुणायै। हृदयादिवामपादान्तम्। ळं असितायै। मूर्द्धादिपादान्तम्। क्षं अनन्तायै। पादादिमूर्द्धान्तम्। इति देवीकलामातृका न्यासः। देवीकलामातृकान्यासं कृत्वा गणपतिं स्मृत्वा देव्या दक्षिणे घृतदीपं तन्मध्ये बिन्दुत्रिकोणषट्कोणं वामे तैलदीपं तन्मध्ये बिन्दुत्रिकोण षट्कोणात्मकं यंत्रं विलिख्य संपूज्य दीपं प्रज्वाल्य सम्पूज्य प्रार्थयेत्- भो दीप देवीरूपस्त्वं। इति दीपं संस्थाप्य शरीरशुद्ध्यर्थं नवार्णमंत्रेण षडंगन्यासाः। कलशे वरुणं संपूज्य शङ्खं घण्टां च सम्पूज्य कलशजलेन सर्वत्र प्रोक्षनते अपवित्रः पवित्रो वा।

# अथ पात्रासादनम् प्रयोगः

देवीपूजा में पात्रासादन प्रयोग अवश्य करना चाहिए। काष्ठ के पाटा चौकी के ऊपर अष्टगन्ध से या चन्दन से शास्त्र विधि से यन्त्र निर्माण करे। वा ताम्रपत्र या रजतपत्र पर भी निर्माण कर सकते हैं।

**।।पात्रासादनयंत्रम्।।**

**''अथ पात्रस्थापनम्'' - तत्रादौ कलशः** ।।स्ववामे बिंदुत्रिकोणषट्कोणवृत्त चतुरस्रात्मकं यंत्रं विलिख्य अक्षतैः पूजयेत्।। मध्ये मूलं। त्रिकोणे त्रिपदैः ऐं ह्रीं क्लीं चामुंडायै विच्चे नमः।। एवं द्विरावृत्त्या षट्कोणे। मातृकया वृत्तं अं आं इं ईं उं ऊं ऋं ॠं लृं ॡं एं ऐं ओं औं अं अः कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं यं रं लं वं शं षं सं हं ळं क्षं इत्यादि क्षान्तम्।। चतुरस्रे षडंगानि। आग्नेये - ऐं हृदयाय। ऐशाने ह्रीं शिरसे। नेर्ऋत्ये - क्लीं शिखायै। वायव्ये। चामुंडायै कवचाय। मध्ये - विच्चे नेत्रत्रयाय। चतुर्दिक्षु मूलेन अस्त्राय।। इति यंत्रं संपूज्य हुमिति आधारं प्रक्षाल्य।। मूलेन संस्थाप्य।। ॐ मं वह्निमंडलाय दशकलात्मने श्रीत्रिगुणात्मिका - दुर्गादेवता - कलशपात्राधाराय नमः इति संपूज्य दशकलाः पूजयेत्।। ॐ यं धूम्रार्चिषे। रं ऊष्मायै। लं ज्वलिन्यै। वं ज्वालिन्यै। शं विस्फुलिंगिन्यै। षं सुश्रियै। सं सुरूपायै। हं कपिलायै। ळं हव्यवाहायै। क्षं कव्यवाहायै।।१०।। इति संपूज्य हुं इति पात्रं प्रक्षाल्य मूलेन संस्थाप्य सूर्यमंडलाय द्वादशकलात्मने श्रीत्रिगुणात्मिका - दुर्गा - देवता - कलशपात्राय नमः इति संपूज्य द्वादशकलाः पूजयेत्।। ॐ कं भं तपिन्यै। खं बं तापिन्यै। गं फं धूम्रायै। घं पं मरिच्यै। ङं नं ज्वालिन्यै। चं धं रुच्यै। छं दं सुषुम्णायै। जं थं भोगदायै। झं तं विश्वायै। ञं णं बोधिन्यै। टं ढं धारिण्यै। ठं डं क्षमायै।।१२।। इति संपूज्य।। तत्र

# अथ गणपूजनम्

ॐ गणपतये नमः।।१।। ॐ कार्तिकाय नमः।।२।। ॐ पुष्पदन्ताय नमः।।३।। ॐ कपर्दिने नमः।।४।। ॐ भैरवाय नमः।।५।। ॐ शूलपाणये नमः।।६।। ॐ ईश्वराय नमः।।७।। ॐ दण्डपाणये नमः।।८।। ॐ नन्दिने नमः।।९।। ॐ महाकालाय नमः।।१०।।
पूर्वादिक्रमेण अक्षतादिना अष्टमूर्त्तीः पूजयेत्। तद्यथा – प्राच्याम् ॐ शर्वाय क्षितिमूर्तये नमः।।१।। ईशान्याम् ॐ भवाय जलमूर्तये नमः।।२।। उदीच्याम् ॐ रुद्रायाग्निमूर्तये नमः।।३।। वायव्याम् ॐ उग्राय वायुमूर्तये नमः।।४।। प्रतीच्याम् ॐ भीमायाकाशमूर्तये नमः।।५।। नैर्ऋत्याम् ॐ पशुपतये यजमानमूर्तये नमः।।६।। दक्षिणस्याम् ॐ महादेवाय सोममूर्तये नमः।।७।। आग्नेय्याम् ॐ ईशानाय सूर्यमूर्तये नमः।।८।। इति सम्पूज्य प्रणालिकायां ह्रीं उमायै नमः इति पूजयेत्। तद्बहिः पूर्वादिषु इन्द्रादीन् दश दिक्पालान् सम्पूजयेत्।। इत्यावरणपूजा।।
**धूपं –** ॐ या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः। तयाऽस्मान्विश्वतस्त्वमयक्ष्मया परि भुज।। ॐ भूर्भुवः स्वः श्री साम्बसदाशिवाय नमः, धूपमाघ्रापयामि।
**दीपं –** ॐ परि ते धन्वनो हेतिरस्मान् वृणक्तु विश्वतः। अथो य इषुधिस्तवारे अस्मन्नि धेहि तम्।। ॐ भूर्भुवः स्वः श्री साम्बसदाशिवाय नमः, दीपं दर्शयामि।
**नैवेद्यं –** ॐ अवतत्य धनुष्ट्व ठं॰ सहस्त्राक्ष शतेषुधे। निशीर्य शल्यानां मुखा शिवो नः सुमना भव।। ॐ भूर्भुवः स्वः श्री साम्बसदाशिवाय नमः, नैवेद्यं निवेदयामि। नैवेद्यान्ते आचमनीयं जलं समर्पयामि। उतरापोशनम् समर्पयामि। जलं समर्पयामि।
**करोद्वर्तनं –** ॐ सिञ्चति परि षिञ्चन्त्युत्सिञ्चन्ति पुनन्ति च। सुरायै बभ्रवै मदे किन्त्वो वदति किन्त्वः।। ॐ भूर्भुवः स्वः श्री साम्बसदाशिवाय नमः, करोद्वर्तनार्थे चन्दनानुलेपनं समर्पयामि।
**ऋतुफलं –** ॐ याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः। बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्व ठं॰ हसः।। ॐ भूर्भुवः स्वः श्री साम्बसदाशिवाय नमः, ऋतुफलानि समर्पयामि। धतूरफलानि समर्पयामि।
**ताम्बूलं-पूगीफलं –** ॐ नमस्त आयुधायानातताय धृष्णवे। उभाभ्यामुत ते नमो बाहुभ्यां तव धन्वने।। ॐ भूर्भुवः स्वः श्री साम्बसदाशिवाय नमः, मुखवासार्थे सपूगीफलं ताम्बूलपत्रं समर्पयामि।
**दक्षिणा –** ॐ यद्दतं यत्परादानं यत्पूर्तं याश्च दक्षिणाः। तदग्निर्वैश्वकर्मणः स्वर्देवेषु नो दधत्।। ॐ भूर्भुवः स्वः श्री साम्बसदाशिवाय नमः, कृतायाः पूजायाः साद्गुण्यार्थे द्रव्यदक्षिणां समर्पयामि।
।। एवं सम्पूज्य साक्षतजलेन तर्पणं कार्य्यम् – ॐ भवं देवं तर्पयामि।।१।। ॐ शर्वं देवं तर्पयामि।।२।। ॐ ईशानं देवं तर्पयामि।।३।। ॐ पशुपतिं देवं तर्पयामि।।४।। ॐ उग्रं

देवं तर्पयामि।।५।। ॐ रुद्रं देवं तर्पयामि।।६।। ॐ भीमं देवं तर्पयामि।।७।। ॐ महान्तं देवं तर्पयामि।।८।।
ॐ भवस्य देवस्य पत्नीं तर्पयामि।।१।। ॐ शर्वस्य देवस्य पत्नीं तर्पयामि।।२।। ॐ ईशानस्य देवस्य पत्नीं तर्पयामि।।३।। ॐ पशुपतेर्देवस्य पत्नीं तर्पयामि।।४।। ॐ उग्रस्य देवस्य पत्नीं तर्पयामि।।५।। ॐ रुद्रस्य देवस्य पत्नीं तर्पयामि।।६।। ॐ भीमस्य देवस्य पत्नीं तर्पयामि।।७।। ॐ महतो देवस्य पत्नीं तर्पयामि।।८।।
एवं तर्पणं कृत्वा मन्त्र पुष्पाञ्जलि मादाय।
ॐ कर्पूरगौरं करुणावतारं संसारसारं भुजगेन्द्रहारम्। सदा वसन्तं हृदयारविन्दे भवं भवानीसहितं नमामि।।१।। वन्दे देवमुमापतिं सुरगुरुं वन्दे जगत्कारणं वन्दे पन्नगभूषणं मृगधरं वन्दे पशूनां पतिम्। वन्दे सूर्यशशांकवह्निनयनं वन्दे मुकुन्दप्रियं वन्दे भक्तजनाश्रयं च वरदं वन्दे शिवं शंकरम्।।२।। शान्तं पद्मासनस्थं शशधरमुकुटं पञ्चवक्त्रं त्रिनेत्रं शूलं वज्रं च खड्गं परशुमभयदं दक्षभागे वहन्तम्। नागं पाशं च घंटां डमरुकसहितं सांकुशं वामभागे नानालंकारयुक्तं स्फटिकमणिनिभं पार्वतीशं नमामि।।३।।
शान्ताकारं शिखरिशयनं नीलकण्ठं सुरेशं विश्वाधारं स्फटिकसदृशं शुभ्रवर्णं शुभाङ्गम्। गौरीकान्तं त्रितयनयनं योगिभिर्ध्यानगम्यं वन्दे शम्भुं भवभयहरं सर्वलोकैकनाथम्।।
**कर्पूरादि आरती करे –** वा पञ्च, एकादश बत्ती से
**आरती –** ॐ आ रात्रि पार्थिव ठ॰ रजः पितुरप्रायि धामभिः।
दिवः सदा ठ॰ सि बृहती वि तिष्ठस आ त्वेषं वर्तते तमः।।
ॐ भूर्भुवः स्वः श्री साम्बसदाशिवाय नमः, कर्पूरार्तिक्यदीपं दर्शयामि।

## भगवान् गङ्गाधर की आरती

ॐ जय गङ्गाधर जय हर जय गिरिजाधीशा।
त्वं मां पालय नित्यं कृपया जगदीशा।।१।। ॐ हर हर हर महादेव
कैलासे गिरिशिखरे कल्पद्रुमविपिने।
गुञ्जति मधुकरपुञ्जे कुञ्जवने गहने।। ॐ हर हर हर महादेव
कोकिलकूजित खेलत हंसावन ललिता।
रचयति कलाकलापं नृत्यति मुदसहिता।।२।। ॐ हर हर हर महादेव
तस्मिंल्ललितसुदेशे शाला मणिरचिता।
तन्मध्ये हरनिकटे गौरी मुदसहिता।। ॐ हर हर हर महादेव
क्रीडा रचयति भूषारञ्जित निजमीशम्।
इन्द्रादिक सुर सेवत नामयते शीशम्।।३।। ॐ हर हर हर महादेव

बिबुधबधू बहु नृत्यत हृदये मुदसहिता।
किन्नर गायन कुरुते सप्त स्वर सहिता।। ॐ हर हर हर महादेव
धिनकत थै थै धिनकत मृदङ्ग वादयते।
क्वण क्वण ललिता वेणुं मधुरं नाटयते।।४।। ॐ हर हर हर महादेव
रुण रुण चरणे रचयति नूपुरमुज्ज्वलिता।
चक्रावर्ते भ्रमयति कुरुते तां धिक तां।। ॐ हर हर हर महादेव
तां तां लुप चुप तां तां डमरू वादयते।
अंगुष्ठांगुलिनादं लासकतां कुरुते।।५।। ॐ हर हर हर महादेव
कर्पूरद्युतिगौरं पञ्चाननसहितम्।
त्रिनयनशशिधरमौलिं विषधरकण्ठयुतम्।। ॐ हर हर हर महादेव
सुन्दरजटाकलापं पावकयुतभालम्।
डमरुत्रिशूलपिनाकं करधृतनृकपालम्।।६।। ॐ हर हर हर महादेव
मुण्डै रचयति माला पन्नगमुपवीतम्।
वामविभागे गिरिजारूपं अतिललितम्।। ॐ हर हर हर महादेव
सुन्दरसकलशरीरे कृतभस्माभरणम्।
इति वृषभध्वजरूपं तापत्रयहरणम्।।७।। ॐ हर हर हर महादेव
शंखनिनादं कृत्वा झल्लरि नादयते।
नीराजयते ब्रह्मा वेदऋचां पठते।। ॐ हर हर हर महादेव
अतिमृदुचरणसरोजं हत्कमले धृत्वा।
अवलोकयति महेशं ईशं अभिनत्वा।।८।। ॐ हर हर हर महादेव
ध्यानं आरति समये हृदये अति कृत्वा।
रामस्त्रिजटानाथं ईशं अभिनत्वा।। ॐ हर हर हर महादेव
संगतिमेवं प्रतिदिन पठनं यः कुरुते।
शिवसायुज्यं गच्छति भक्त्या यः शृणुते।।९।। ॐ हर हर हर महादेव

जलेन प्रदक्षिणं पुष्पेण देववन्दनम् अभिवन्दनम् आत्मवन्दनम् हस्तं प्रक्षाल्य।

**मन्त्र पुष्पाञ्जलिं –** ॐ यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्। ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः।। ॐ राजाधिराजाय प्रसह्य साहिने नमो वयं वैश्रवणाय कुर्महे। स मे कामान् कामकामाय मह्यं कामेश्वरो वैश्रवणो ददातु।। कुबेराय वैश्रवणाय महाराजाय नमः।

ॐ स्वस्ति साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं महाराज्यमाधिपत्यमयं समन्तपर्यायी स्यात् सार्वभौमः सार्वायुषान्तादापरार्धात्। पृथिव्यै समुद्रपर्यन्ताया एकराडिति

तदप्येष श्लोकोऽभिगीतो मरुतः परिवेष्टारो मरुत्तस्यानवसन् गृहे। आविक्षितस्य कामप्रेर्विश्वेदेवाः सभासद इति।
ॐ विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात्। सं बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जनयन् देव एकः।। मा नो महान्तमुत मा नो अर्भकं मा न उक्षन्तमुत मा न उक्षितम्। मा नो वधीः पितरं मोत मातरं मा नः प्रियास्तन्वो रुद्र रीरिषः।। मानस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः। मा नो वीरान् रुद्र भामिनो वधीर्हविष्मन्तः सदमित् त्वा हवामहे।।
ॐ तत्पुरुषायविद्महे महादेवाय धीमहि। तन्नोरुद्रः प्रचोदयात्।।
मन्दारमालाङ्कुलितालकायै कपालमालाङ्कितशेखराय। दिव्याम्बरायै च दिगम्बराय नमः शिवायै च नमः शिवाय।। पुष्पाञ्जलिम् समर्पयामि।
**प्रदक्षिणा –** ॐ ये तीर्थानि प्प्रचरन्ति सृकाहस्ता निषङ्गिणः। तेषा ठं॰ सहस्त्रयोजनेऽव धन्वानि तन्मसि।। ॐ सप्तास्यासन् परिधयस्त्रिः सप्त समिधः कृताः। देवा यद्यज्ञं तन्वाना अबध्नन् पुरुषं पशुम्।। यानि कानि च पापानि जन्मान्तरकृतानि च। तानि तानि प्रणश्यन्ति प्रदक्षिणपदे पदे।। प्रदक्षिणां समर्पयामि।
**नमस्कार –** असितगिरिसमं स्यात् कज्जलं सिन्धुपात्रे सुरतरुवरशाखा लेखनी पत्रमुर्वी। लिखति यदि गृहीत्वा शारदा सर्वकालं तदपि तव गुणानामीश पारं न याति।।१।। श्मशानेष्वाक्रीडा स्मरहर पिशाचाः सहचरा – श्चिताभस्मालेपः स्त्रगपि नृकरोटीपरिकरः। अमङ्गल्यं शीलं तव भवतु नामैवमखिलं तथापि स्मर्तृणां वरद परमं मङ्गलमसि।।२।।
**क्षमाप्रार्थना –** यदक्षरपद भ्रष्टं मात्राहीनं च यद्भवेत। तत्सर्वम् क्षम्यतां देव प्रसीद परमेश्वर।। मत्समो नास्ति पापिष्ठस्त्वत्समो नास्तिपापहा। इति मत्वा दयासिन्धो यथेच्छसि तथा कुरु।।
**अभिषेकोदक नैत्र स्पर्श –** निरावलम्बस्य ममावलम्बं विपाटिताशेषविपत्कदम्बम्। मदीय पापाचल – पातशम्बं प्रवर्ततां वाचि सदैव बम्बम्।।
"बम-बम का उच्चारण करे"
ॐ अनेन यथा ज्ञानेन यथामिलितोपचारद्रव्यैः ध्यानावाहनासन पाद्यार्घाचमनीय स्नान वस्त्रोपवीत गन्धपुष्प धूप-दीप-नैवेद्य-ताम्बूल दक्षिणा प्रदक्षिणा-मन्त्र पुष्परूपैः षोडशोपचारैः अन्योपचारैश्च कृतेन पूजनेन ॐ भूर्भुवः स्वः श्री भगवते साम्बसदाशिवाय सपरिकरः स गणः सहिताः प्रीयन्तां न मम – श्री भगवते साम्बसदाशिव –
अर्पण मस्तु।।
"इति शिव पूजनम्"

# श्री पार्थिव शिवपूजनम्

नित्य कर्म से निवृत होकर शुभ मुहूर्त में "शिवालये वा पुण्यस्थाने" स्थान शुद्धि करे। पूर्व या उत्तर की ओर मुख करके पूजन करे।

आचमनम् प्राणायाम् न्यासादि आसनशुद्धि एवं स्वस्तिवाचन इत्यादि करे।

**संकल्प -** ॐ विष्णुर्विष्णुर्विष्णुः, अद्य... मम सर्वारिष्टनिरसनपूर्वकसर्वपापक्षयार्थं दीर्घायुरारोग्यधनधान्यपुत्र-पौत्रादिसमस्तसम्पत्प्रवृद्ध्यर्थं श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं श्रीसाम्बसदाशिवप्रीत्यर्थं पार्थिवलिङ्गपूजनमहं करिष्ये। वा ब्राह्मण द्वारा कारयिष्ये (यथासंख्या उच्चारण करे) तदङ्गतया निर्विघ्नता सिद्यर्थम् - गणपत्यादि देवानामर्चयिष्ये

**भूमि प्रार्थना -** ॐ सर्वाधारे धरे देवि त्वद्रूपां मृत्तिकामिमाम्। ग्रहीष्यामि प्रसन्ना त्वं लिङ्गार्थं भव सुप्रभे।। ॐ ह्राँ पृथिव्यै नमः।

**मिट्टी का ग्रहण -** उद्धृतासि वराहेण कृष्णेन शतबाहुना। मृत्तिके त्वां च गृह्णामि प्रजया च धनेन च।।

ॐ (वं) इत सुधाबीजेन - मृदमासिञ्च्य पिण्डं कृत्वाऽग्रे संस्थाप्य तस्मादल्पमृदं गृहीत्वा "ॐ ह्रीं ग्लौं गं गणपतये ग्लौं गं ह्रीं" इत्येकादशाक्षरमन्त्रेण बालगणपतिं वराभयलसत्पाणि-पद्मं निर्माय पीठे संस्थाप्य लिङ्गं कुर्यात्। ॐ नमो हराय इति मन्त्रेण बिभीतकफलमात्रमृदं गृहीत्वा "ॐ नमो महेश्वराय" इति मन्त्रेण मनोहरम् अंगुष्ठमानादधिकं वितस्तिमात्रावधि यथेष्टं साङ्गं लिङ्गं विधाय तस्योपरि गुटिकास्थापनक्रमः गङ्गागणपोमोः शिवकुमारगुटिकाः क्रमाद् ज्ञेयाः एका तिस्त्र पञ्च च तिस्त्रो द्वे स्थापनात्सुखदाः।। एवं लिङ्गं कुर्यात्, सद्यः समस्ताघनाशनम्।। ततः स्वपुरतः 'ॐ शूलपाणये नमः' इति मन्त्रेण पुष्पाक्षतबिल्वपत्रयुक्तताम्रादिपात्रे वा वस्त्रोपरि पीठमध्ये स्थापयेत्। एवमन्यान्यपि लिङ्गानि यथासंकल्पितानि कृत्वा अवशिष्टमृदा, 'ॐ ऐं हुँ क्षुं क्लीं कुमाराय नमः' इति मन्त्रेण षणमुखं कुमारञ्च कृत्वा लिङ्गपङ्क्त्यन्ते स्थापयेत्। ततः आचम्य प्राणानायम्य, ॐ अस्य श्रीसदाशिवमन्त्रस्य वामदेवऋषिः, पंक्तिश्छन्दः, श्रीसदाशिवो देवता, ॐ बीजं, नमः शक्तिः, शिवाय कीलकं, मम साम्बसदाशिवप्रीत्यर्थे पार्थिवलिङ्गपूजने विनियोगः ॐ वामदेवऋषये नमः शिरसि। ॐ पंक्तिश्छन्दसे नमः मुखे। ॐ श्रीसदाशिवदेवतायै नमः हृदये। ॐ बीजाय नमः गुह्ये। ॐ शक्तये नमः पादयोः। ॐ शिवाय कीलकाय नमः सर्वाङ्गे। इति ऋष्यादिन्यासः। ॐ ॐ अंगुष्ठाभ्यां नमः। ॐ नं तर्जनीभ्यां नमः। ॐ मं मध्यमाभ्यां नमः। शिं अनामिकाभ्यां नमः। वां कनिष्ठिकाभ्यां नमः। ॐ यं करतलकरपृष्ठाभ्यां नमः इति करन्यासः।। ॐ ॐ हृदयाय नमः। ॐ नं॰ शिरसे स्वाहा।

ॐ मं शिखायै वषट्। ॐ शिं कवचाय हुँ। ॐ वां नेत्रत्रयाय वौषट्। ॐ यं अस्त्राय फट्। एवं न्यासविधिं कृत्वा कुम्भपूजां विधाय ध्यानं कुर्यात्। ॐ ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं, रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम्। पद्मासीन समन्तात्स्तुतममरगणैर्व्याघ्रकृतिं वसानं, विश्वाद्यं विश्ववन्द्यं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम्।।१।। इति ध्यात्वा मानसोपचारैः सम्पूज्य प्राणप्रतिष्ठां कुर्यात् - ॐ अस्य श्रीप्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः, ऋग्यजुःसामानि च्छन्दांसि, क्रियामयवपुः प्राणाख्या देवता, आं बीजम्, ह्रीं शक्ति; क्रौं कीलकं देवे प्राणप्रतिष्ठापने विनियोगः। ब्रह्मविष्णुरुद्रऋषिभ्यो नमः शिरसि। ॐ ऋग्यजुःसामच्छन्दोभ्यो नमो मुखे। ॐ प्राणाख्यदेवतायै नमः हृदि। ॐ आं बीजाय नमः गुह्ये। ॐ ह्रीं शक्तये नमः पादयोः। ॐ क्रौं कीलकाय नमः सर्वाङ्गे इति कृत्वा ॐ आं ह्रीं क्रौं यँ रँ लँ वँ शँ षँ सँ हँ सः सोहँ शिवस्य प्राणा इह प्राणाः।। ॐ आँ ह्रीं कौं यँ रँ लँ वँ शँ षँ सँ हँ सः सोहँ शिवस्य जीव इह स्थितः। ॐ आँ ह्रीं क्रौं यँ रँ लँ वँ शँ षँ सँ हँ सः सोहँ शिवस्य सर्वेन्द्रियाणि वाङ्मनस्त्वक्चक्षुश्श्रोत्रघ्राणजिह्वापाणिपादपायूपस्थानि इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा।। मनसि एवं पठित्वा लिङ्गोपरि तण्डुलान् क्षिपेत्।। एवं प्राणप्रतिष्ठां कृत्वा पुनरञ्जलिं बद्धवा ध्यायेत् - ॐ दक्षोत्सङ्गनिषण्णकुञ्जरमुखं प्रेम्णा करेण स्पृशन्वामोरुस्थितवल्लभाङ्कनिलयं स्कन्दं परेणामृशन्। इष्टाभीतिमनोहरं करयुगं बिभ्रत् प्रसन्नाननो, भूयान्नः शरदिन्दुसुन्दरतनुः श्रेयस्करः शङ्करः।। इति ध्यात्वा नमस्कारं कुर्यात् तद्यथा - नमोऽस्तु स्थाणुरुपाय ज्योतिर्लिङ्गामृतात्मने। चतुर्मूर्तिश्च पुंशक्त्या भासितांगाय शम्भवे। सर्वज्ञज्ञान-विज्ञानप्रदानैकमहात्मने। नमस्ते देवदेवेश सर्वभूतहितेरत।। इति नत्वा स्थापितं लिङ्गं स्पृशन्। ॐ भूः पुरुषं साम्बसदाशिवमावाहयामि।। ॐ भुवः पुरुषं साम्बसदाशिवमावाहयामि। ॐ स्वः पुरुषं साम्बसदाशिवमावाहयामि। इत्यावाह्य। ॐ स्वामिन् सर्वजगन्नाथ यावत्पूजावसानकम्। तावत्त्वं प्रीतिभावेन लिङ्गेऽस्मिन् सन्निधौ भव।। इति पुष्पाञ्जलिं दत्वा - ॐ ह्रीं ग्लौं णं गणपतये ग्लौं गं ह्रीं।। इत्येकादशार्णमन्त्रेण गणपतिं सम्पूज्य 'ॐ ऐं हुँ क्षुँ क्लीं कुमाराय नमः इतिदशाक्षरमन्त्रेण स्कन्दं पूजयेत्।

पूर्व लिखित शिवपूजा प्रकरण के अनुसार श्री पार्थिव पूजा करे।

शिवमहिम्न स्तोत्र के द्वारा जल दूध से अभिषेक करने से झटिती फल की प्राप्ती होती है। कामना अनुसार १ से लेकर सवा करोड़ तक पार्थिव शिव लिङ्ग पूजा अभिषेक का लेख मिलता है शास्त्रों में।

**विसर्जन मन्त्र -** गच्छ गच्छ सुरश्रेष्ठ स्वस्थाने परमेश्वर। मम पूजां गृहीत्वेमां पुनरागमनाय च।।

**समर्पण -** अनेन कृतार्चनेन पार्थिव लिङ्ग कर्मणा श्री यज्ञ स्वरूपः शिवः प्रीयताम् न मम। क्षमा प्रार्थना करे। ॐ विष्णवेनमः ॐ विष्णवेनमः ॐ विष्णवेनमः

"शिव उपासना अंक (कल्याण) से उद्धृत"

शिव महिम्न स्तोत्र के द्वारा पूजा अनुष्ठान करने से अतिशीघ्र कामना पूर्ण होती है।

**विनियोग** - ॐ अस्य श्रीशिवमहिम्नःस्तोत्रस्य श्रीपुष्पदन्त ऋषिः, शिखरिण्यादिच्छन्दांसि, श्रीमदाशुतोषशिवो देवता, हौं बीजम्, जूं शक्तिः, सः कीलकं मम श्रीसाम्बसदाशिवप्रीत्यर्थे (अमुकफलप्राप्तये) पाठे, अभिषेके विनियोगः।

**ऋष्यादि न्यास** - श्रीपुष्पदन्तर्षये नमः (शिरसि), शिखरिण्यादिच्छन्दोभ्यो नमः (मुखे), श्रीमदाशुतोषशिवदेवतायै नमः (हृदये), हौं बीजाय नमः (गुह्ये), जूं शक्तये नमः (पाद्योः), सः कीलकाय नमः (नाभौ), विनियोगाय नमः (सर्वाङ्गे)।

| कर-हृदयादि-न्यास | | पहली बार | दूसरी बार | |
|---|---|---|---|---|
| भवःशर्वो रुद्रः | (पूरा श्लोक) | अङ्गुष्ठाभ्यां नमः। | हृदयाय | नमः। |
| नमो नेदिष्ठाय। | "। | तर्जनीभ्यां नमः। | शिरसे | स्वाहा। |
| बहुलरजसे। | "। | मध्यमाभ्यां नमः। | शिखायै | वषट्। |
| मनः प्रत्यक्चिते। | "। | अनामिकाभ्यां नमः। | कवचाय | हुम्। |
| श्मशानेष्वाक्रीडा। | "। | कनिष्ठिकाभ्यां नमः। | नेत्रत्रयाय | वौषट्। |
| हरिस्ते साहस्त्रं | "। | करतलकरपृष्ठाभ्यां नमः। | अस्त्राय | फट्। |

**ध्यानम्** - ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचन्द्रावतंसं रत्नाकल्पोज्ज्वलाङ्गं परशुमृगवराभीतिहस्तं प्रसन्नम्। पद्मासीनं समन्तात् स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं विश्वाद्यं विश्ववन्द्यं निखिलभयहरं पञ्चवक्त्रं त्रिनेत्रम्।।

इसके पश्चात् आगे बताये गये श्लोकों को पूरा बोले

और उनके पहले 'ॐ ऐं ह्रीं श्रीं हौं जूं सः' ये प्रणवयुक्त बीज लगाकर शिवजी की विशेष पूजा करनी चाहिए। यथा -

| | | |
|---|---|---|
| त्वमर्कस्तवं सोमः। | पादयोः पाद्यं | समर्पयामि। |
| त्रयी साख्यं योगः। | हस्तयोरर्घ्यं | " |
| भवः शर्वो रुद्रः। | आचमनीयं | " |
| नमो नेदिष्ठाय। | जलस्नानं | " |
| बहलरजसे। | दुग्धस्नानं | " |
| ऐं ह्रीं श्रीं हौं जूं सः (बीज मन्त्र) | शुद्धजलस्नानं | " |
| मनःप्रत्यक्चित्ते। | दधिस्नानं | " |
| (बीजमन्त्र) | शुद्धजलस्नानं | " |

| | | |
|---|---|---|
| श्मशानेष्वाक्रीडा। | घृतस्नानं | ” |
| (बीजमन्त्र) | शुद्धजलस्नानं | ” |
| स्व। लावण्याशंसा। | मधुस्नानं | ” |
| (बीजमन्त्र) | शुद्धजलस्नानं | ” |
| प्रजानाथं नाथः। | शर्करास्नानं | ” |
| (बीजमन्त्र) | शुद्धजलस्नानं | ” |
| मधुस्फीता। | पञ्चामृत स्नानं | ” |
| (बीजमन्त्र) | शुद्धजलस्नानं | ” |
| महोक्षः खट्वाङ्ग। | भस्म स्नानं | ” |
| (बीजमन्त्र) | शुद्धजलस्नानं | ” |
| अजन्मानो। | गन्धोदक स्नानं | ” |
| (बीजमन्त्र) | शुद्धजलस्नानं | ” |
| त्रयी सांख्यं। | उद्वर्त स्नानं | ” |
| (बीजमन्त्र) | शुद्धजलस्नानं | ” |

उत्तर निर्माल्य विसृज्य गन्धाक्षतं पुष्पं बिल्व पत्रं समर्प्य धारा पात्रं गन्धादिभि सम्पूज्य।
जल दूध गङ्गोदक से महिम्नस्तोत्र से अभिषेक करे।
अभिषेकान्ते आचमनीयम् जलं समर्पयामि

| | | |
|---|---|---|
| रथः क्षोणी। | आभरणम् | ” |
| क्रतौ सुप्ते जाग्रत्। | वस्त्रं | ” |
| रथः क्षोणी यन्ता। | यज्ञोपवीतं | ” |
| क्रियादक्षो दक्षः। | पुनर्वस्त्रं | ” |
| यदृद्धिं सुत्राम्णो। | गन्धं | ” |
| अकाण्डब्रह्माण्ड। | अक्षतान् | ” |
| असिद्धार्था नैव। | भस्म | ” |
| हरिस्ते साहस्त्रं | पुष्पाणि दूर्वा | ” |
| अयत्नादापाद्य। | बिल्वपत्राणि | ” |
| तवैश्वर्य यत्नाद। | परिमलद्रव्यं | ” |
| तवैश्वर्य यत्तत्। | (इत्र) सुगन्धिद्रव्यं | ” |
| तवैश्वर्य यत्नाद। | धूपं | ” |

| | | |
|---|---|---|
| अमुष्य त्वत्सेवा। | दीपं | " |
| महीपादाघाताद्। | नैवेद्यं, ताम्बुलं | " |
| नमो नेदिष्ठाय। | दक्षिणा नीराजनं | " |
| कृशपरिणति चेतः। | पुष्पाञ्जलिं | " |
| असितगिरिसमं। | क्षमाप्रार्थनां | " |
| त्वमर्कस्त्वं सोमः। | प्रदक्षिणां | " |

धूप दीप से पूर्व या दक्षिणा के उपरान्त एकादश रुद्र व शक्ति, गणादि पूजा करे। पूजा के बाद तर्पण करे।

ॐ नमः शिवाय यथा शक्ति जाप करना परम लाभदायक है।

ॐ तत्सत्

## ।।अथ रुद्रयाग स्वाहाकार मंत्राः।।

ॐ गणानान्त्वा। स्वाहा। ॐ अम्बेऽ। स्वाहा। इति हुत्वा, ॐ यज्जाग्रतः। (६ मंत्राः) स्वाहा। ॐ सहस्त्रशीर्षा। (१६ मंत्राः) स्वाहा। ॐ अद्भय सम्भृत। (६ मंत्राः) स्वाहा। ॐ आशुः शिशानो। (१२ मंत्राः) स्वाहा। ॐ विभ्राड बृहत्पिबतु। (१७ मंत्राः) स्वाहा। ॐ भूः, ॐ भुवः, ॐ स्वः, ॐ नमस्ते रुद्द्र मन्यवऽउतोत – ऽइषवे नमः। बाहुब्भ्यामुत ते नमः स्वाहा।।१।।

ॐ या ते रुद्र शिवा तनूरघोरापापकाशिनी। तया नस्तन्वा शन्तमया गिरिशन्ताभिचाकशीहि स्वाहा।।२।।

ॐ यामिषुङ्गिरिशन्त हस्ते व्विभर्ष्यस्तवे। शिवाङ्गिरित्र ताङ्कुरु मा हि ठं। पुरुषञ्जगत् स्वाहा।।३।।

ॐ शिवेन व्वचसा त्वा गिरिशाच्छा व्वदामसि। यथा नः सर्व्व मिज्जगदयक्ष्म ठं। सुमनाऽअसत् स्वाहा।।४।।

ॐ अद्ध्यवोचदधिवक्ता प्प्रथमो दैव्व्यो भिषक। अहींश्च सर्व्वाञ्जम्भ यन्त्सर्व्वाश्च्च यातुधान्योऽधराचीः परासुव स्वाहा।।५।।

ऽअसौयस्ताम्म्रोऽ अरुणऽउत बब्भ्रुः सुमङ्गलः। ये चैन ठं। रुद्द्राऽअभितो दिक्षु श्रिताः सहस्त्रशो वैषा ठं। हेडऽईमहेस्वाहा।।६।।

ॐ असौ योऽवसर्प्पति नीलग्ग्रीवो व्विलोहितः। उतैनङ्गोपा अदृश्रन्नदृश्रन्नुदहार्य्यः स दृष्ट्टो मृडयाति नः स्वाहा।।७।।

ॐ नमोस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे।
अथो ये ऽअस्य सत्त्वानोऽहन्तेब्भ्योऽ करन्नमः स्वाहा।।८।।
ॐ प्रमुञ्च धन्नवनस्त्वमुभयोरात्क्र्योर्ज्ज्याम।
याश्च्च ते हस्तऽइषवः परा ता भगवो व्वप स्वाहा।।९।।
ॐ व्विज्ज्यन्धनुः कपर्द्दिनो व्विशल्यो बाणवाँ२ऽउत।
अनेशन्नस्य याऽ इषवऽ आभुरस्य निषङ्गधिः स्वाहा।।१०।।
ॐ या ते हेतिर्म्मीढुष्ट्टम हस्ते बभूव ते धनुः।
तयास्म्मान्विश्वतस्त्व मयक्ष्मया परिभुज स्वाहा।।११।।
ॐ परि ते धन्वनो हेतिरस्मान्वृणक्तु व्विश्श्वतः।
अथोयऽइषु - धिस्तवारेऽ अस्मन्निधेहि तम् स्वाहा।।१२।।
ॐ अवतत्त्य धनुष्ट्टव ठ॰ सहस्राक्ष शतेषुधे।
निशीर्य्य शल्ल्यानाम्मुखा शिवो नः सुमना भव स्वाहा।।१३।।
ॐ नमस्तेऽ आयुधायानातताय धृष्णवे।
उभाभ्यामुत ते नमो बाहुब्भ्यान्तव धन्वने स्वाहा।।१४।।
ॐ मा नो महान्तमुत मा नोऽअर्ब्भकम्मा नऽ उक्षन्तमुत मा नऽ उक्षितम्।
मा नो व्वधीः पितरम्मोत मातरम्मा नः प्रियास्तन्वो रुद्र रीरिषः स्वाहा।।१५।।
ॐ मा नस्तोके तनये मा नऽ आयुषि मा नो गोषु मा नो अश्श्वेषु रीरिषः।
मा नो व्वीरान् रुद्द्र भामिनो व्वधीर्हविष्मन्तः सदमित्त्वा हवामहे स्वाहा ।।१६।।
ॐ नमो हिरण्यबाहवे सेनान्न्ये दिशाञ्चपतये नमः स्वाहा ।।१७।।
ॐ नमो व्वृक्षेब्भ्यो हरिकेशेब्भ्यः पशुनाम्पतये नमः स्वाहा ।।१८।।
ॐ नमः शष्पिञ्जराय त्विषीमते पथीनाम्पतये नमः स्वाहा ।।१९।।
ॐ नमो हरिकेशायोपवीतिने पुष्टटानाम्पतये नमः स्वाहा ।।२०।।
ॐ नमो बब्भ्लुशाय व्याधिनेन्नानाम्पतये नमः स्वाहा ।।२१।।
ॐ नमो भवस्य हेत्त्यै जगताम्पतये नमः स्वाहा ।।२२।।
ॐ नमो रुद्द्रायाततायिने क्षेत्राणाम्पतये नमः स्वाहा ।।२३।।
ॐ नमो सूतायाहन्त्यै व्वनानाम्पतये नमः स्वाहा ।।२४।।
ॐ नमो रोहिताय स्त्थपतये व्वृक्षाणाम्पतये नमः स्वाहा ।।२५।।
ॐ नमो भुवन्तये व्वारिवस्कृतायौषधीनाम्पतये नमः स्वाहा ।।२६।।
ॐ नमः मन्त्रिणे वाणिजाय कक्षाणाम्पतये नमः स्वाहा ।।२७।।
ॐ नमः ऽउच्चैर्ग्घोषायाक्क्रन्दयते पत्तीनाम्पतये नमः स्वाहा ।।२८।।

ॐ नमः कृ त्स्नायतया धावते सत्त्वनाम्पतये नमः स्वाहा ।।२९।।
ॐ नमः सहमानाय निव्व्याधिनऽ आव्याधिनीनाम्पतये नमः स्वाहा ।।३०।।
ॐ नमो निषीङ्गिणे ककुभाय स्तेनाम्पतये नमः स्वाहा ।।३१।।
ॐ नमो निचेरवे परिचरायारण्यानाम्पतये नमः स्वाहा ।।३२।।
ॐ नमो वञ्चते परिवञ्चते स्तायूनाम्पतये नमः स्वाहा ।।३३।।
ॐ नमो निषङ्गिणऽइषुधिमते तस्कराणाम्पतये नमः स्वाहा ।।३४।।
ॐ नमो सृकायिब्भ्यो जिघा ठं॰ सद्ब्भ्यो मुष्णताम्पतये नमः स्वाहा ।।३५।।
ॐ नमो ऽसिमद्ब्भ्यो नक्तञ्चरद्ब्भ्यो व्विकृन्तानाम्पतये नमः स्वाहा ।।३६।।
ॐ नम ऽउष्णीषिणे गिरिचराय कुलुञ्चानाम्पतये नमः स्वाहा ।।३७।।
ॐ नम ऽइषुमद्ब्भ्यो धन्वायिब्भ्यश्श्च वो नमः स्वाहा ।।३८।।
ॐ नमऽआतन्वानेब्भ्यः प्प्रतिदधानेब्भ्यश्श्च वो नमः स्वाहा ।।३९।।
ॐ नमऽ आयच्छद्ब्भ्यो स्यद्भ्यश्श्चवो नमः स्वाहा ।।४०।।
ॐ नमो व्विसृजद्ब्भ्यो व्विद्धयद्भ्यश्श्च वो नमः स्वाहा ।।४१।।
ॐ नमः स्वपद्ब्भ्यो जाग्ग्रद्ब्भ्यश्श्च वो नमः स्वाहा ।।४२।।
ॐ नमः शयानेब्भ्यऽ आसीनेब्भ्यश्श्च वो नमः स्वाहा ।।४३।।
ॐ नमस्तिष्ठद्ब्भ्यो धावद्ब्भ्यश्श्च वो नमः स्वाहा ।।४४।।
ॐ नमः सभाब्भ्य सभापतिब्भ्यश्श्च वो नमः स्वाहा ।।४५।।
ॐ नमोऽश्श्वेब्भ्योऽश्श्वपतिब्भ्यश्श्च वो नमः स्वाहा ।।४६।।
ॐ नमो ऽआव्व्याधिनीब्भ्यो व्विविद्ध्यन्तीब्भ्यश्श्च वो नमः स्वाहा ।।४७।।
ॐ नमऽ उगणाब्भ्यस्तृठं हतीब्भ्यश्श्च वो नमः स्वाहा ।।४८।।
ॐ नमो गणेब्भ्यो गणपतिब्भ्यश्श्च वो नमः स्वाहा ।।४९।।
ॐ नमो व्व्रातेब्भ्यो व्व्रातपतिब्भ्यश्श्च वो नमः स्वाहा ।।५०।।
ॐ नमो गृत्सेब्भ्यो गृत्सपतिब्भ्यश्श्च वो नमः स्वाहा ।।५१।।
ॐ नमो व्विरूपेब्भ्यो व्विश्श्वरूपेब्भ्यश्श्च वो नमः स्वाहा ।।५२।।
ॐ नमः सेनाब्भ्यः सेनानिब्भ्यश्श्च वो नमः स्वाहा ।।५३।।
ॐ नमो रथिब्भ्योऽ अरथेब्भ्यश्श्च वो नमः स्वाहा ।।५४।।
ॐ नमः क्षत्तृब्भ्यः सङ्ग्रहीतृब्भ्यश्श्च वो नमः स्वाहा ।।५५।।
ॐ नमो महद्ब्भ्योऽ अर्ब्भकेब्भ्यश्श्च वो नमः स्वाहा ।।५६।।
ॐ नमस्तक्षब्भ्यो रथकारेब्भ्यश्श्च वो नमः स्वाहा ।।५७।।
ॐ नमः कुलालेब्भ्यः कम्मारिब्भ्यश्श्च वो नमः स्वाहा ।।५८।।

ॐ नमो निषादेब्भ्यः पुञ्जिष्ट्टेब्भ्यश्श्च वो नमः स्वाहा ।।५९।।
ॐ नमः श्वनिब्भ्यो मृगयुब्भ्यश्श्च वो नमः स्वाहा ।।६०।।
ॐ नमः श्वब्भ्यः श्वपतिब्भ्यश्श्च वो नमः स्वाहा ।।६१।।
ॐ नमो भवाय च रुद्द्राय च स्वाहा। ।६२।।
ॐ नमो शर्व्वाय च पशुपतये च स्वाहा ।।६३।।
ॐ नमो नीलग्ग्रीवाय च शितिकण्ठाय च स्वाहा ।।६४।।
ॐ नमः कपर्द्दिने च व्युप्प्तकेशाय च स्वाहा ।।६५।।
ॐ नमः सहस्स्राक्षाय च शतधन्न्वने च स्वाहा ।।६६।।
ॐ नमो गिरिशयाय च शिपिविष्ट्टाय च स्वाहा ।।६७।।
ॐ नमो मीढुष्ट्टमाय चेषुमते च स्वाहा ।।६८।।
ॐ नमो ह्रस्वाय च व्वामनाय च स्वाहा ।।६९।।
ॐ नमो बृहते च व्वर्षीयसे च स्वाहा ।।७०।।
ॐ नमो व्वृद्धाय च सवृधे च स्वाहा ।।७१।।
ॐ नमो ऽग्ग्रयाय च प्प्रथमाय च स्वाहा ।।७२।।
ॐ नमऽआशवे चाजिराय च स्वाहा ।।७३।।
ॐ नमः शीग्घ्र्याय च शीब्भ्याय च स्वाहा ।।७४।।
ॐ नमऽऊर्म्म्याय चावस्वन्न्याय च स्वाहा ।।७५।।
ॐ नमो नादेयाय च द्द्वीप्प्याय च स्वाहा ।।७६।।
ॐ नमो ज्ज्येष्ठाय च कनिष्ठाय च स्वाहा ।।७७।।
ॐ नमो पूर्व्वजाय चापराय च स्वाहा ।।७८।।
ॐ नमो मद्ध्यमाय चापगल्भाय च स्वाहा ।।७९।।
ॐ नमो जघन्न्याय च बुद्ध्न्याय च स्वाहा ।।८०।।
ॐ नमः सोब्भ्याय च प्प्रतिसर्य्याय च स्वाहा ।।८१।।
ॐ नमः याम्म्याय च क्षेम्म्याय च स्वाहा ।।८२।।
ॐ नमः श्लोक्क्याय च चावसन्न्याय च स्वाहा ।।८३।।
ॐ नमऽ उर्व्वर्य्याय च खल्ल्याय च स्वाहा ।।८४।।
ॐ नमः व्वन्न्याय च कक्क्ष्याय स्वाहा ।।८५।।
ॐ नमो श्रवाय च प्प्रतिश्रवाय च स्वाहा ।।८६।।
ॐ नमऽ आशुषेणाय चाशुरथाय च स्वाहा ।।८७।।
ॐ नमः शूराय चावभेदिने च स्वाहा ।।८८।।

ॐ नमो बिल्म्मिने च कवचिने च स्वाहा ।।८९।।
ॐ नमो व्वर्म्मिणे च वरूथिने च स्वाहा ।।९०।।
ॐ नमः श्श्रुताय च श्श्रुतसेनाय च स्वाहा ।।९१।।
ॐ नमो दुन्दुभ्याय चाहनन्याय च स्वाहा ।।९२।।
ॐ नमो धृष्णवे च प्प्रमृशाय च स्वाहा ।।९३।।
ॐ नमो निषङ्गिणे चेषुधिमते च स्वाहा ।।९४।।
ॐ नमस्तीक्ष्णेषवे चायुधिने च स्वाहा ।।९५।।
ॐ नमः स्वायुधाय च सुधन्वने च स्वाहा ।।९६।।
ॐ नमः स्रुत्याय च पत्थ्याय च स्वाहा ।।९७।।
ॐ नमः काट्याय च नीप्प्याय च स्वाहा ।।९८।।
ॐ नमः कुल्ल्याय च सरस्याय च स्वाहा ।।९९।।
ॐ नमो नादेयाय च व्वैशन्ताय च स्वाहा ।।१००।।
ॐ नमः कूप्प्याय चावट्याय च स्वाहा ।।१०१।।
ॐ नमो व्वीद्ध्याय चातप्प्याय च स्वाहा ।।१०२।।
ॐ नमो मेग्घ्याय च विद्युत्त्याय च स्वाहा ।।१०३।।
ॐ नमो व्वर्ष्याय चावर्ष्याय च स्वाहा ।।१०४।।
ॐ नमो व्वात्त्याय च रेष्म्म्याय च स्वाहा ।।१०५।।
ॐ नमो वास्तव्याय च वास्तुपाय च स्वाहा ।।१०६।।
ॐ नमः सोमाय च रुद्द्राय च स्वाहा ।।१०७।।
ॐ नमस्ताम्राय चारुणाय च स्वाहा ।।१०८।।
ॐ नमः शङ्गवे च पशुपतये च स्वाहा ।।१०९।।
ॐ नमऽ उग्ग्राय च भीमाय च स्वाहा ।।११०।।
ॐ नमोऽग्ग्रेवधाय च दूरेवधाय च स्वाहा ।।१११।।
ॐ नमो हन्त्रे च हनीयसे च स्वाहा ।।११२।।
ॐ नमो व्वृक्षेब्भ्यो हरिकेशेब्भ्यो स्वाहा ।।११३।।
ॐ नमस्ताराय स्वाहा ।।११४।।
ॐ नमः शम्भवाय च मयोभवाय च स्वाहा ।।११५।।
ॐ नमः शंकराय च मयस्कराय च स्वाहा ।।११६।।
ॐ नमः शिवाय च शिवतराय च स्वाहा ।।११७।।
ॐ नमः पार्य्याय चावार्य्याय च स्वाहा ।।११८।।

ॐ नमः प्रतरणाय चोत्तरणाय च स्वाहा ।।११९।।
ॐ नमस्तीर्त्थ्याय च कुल्ल्याय च स्वाहा ।।१२०।।
ॐ नमः शष्प्याय च फेन्याय च स्वाहा ।।१२१।।
ॐ नमः सिकत्त्याय च प्रवाह्याय च स्वाहा ।।१२२।।
ॐ नमः किर्ठ शिलाय च क्षयणाय च स्वाहा ।।१२३।।
ॐ नमः कपर्द्दिने च पुलस्तये च स्वाहा ।।१२४।।
ॐ नमऽ इरिण्ण्याय च प्रपत्थ्याय च स्वाहा ।।१२५।।
ॐ नमो व्व्रज्ज्याय च गोष्ठ्याय च स्वाहा ।।१२६।।
ॐ नमऽ नमस्तल्प्याय च गेह्याय च स्वाहा ।।१२७।।
ॐ नमः हृदय्याय च निवेष्प्याय च स्वाहा ।।१२८।।
ॐ नमो काट्ट्याय च गह्वरेष्ट्ठाय स्वाहा ।।१२९।।
ॐ नमः शुष्क्क्याय च हरित्त्याय च स्वाहा ।।१३०।।
ॐ नमः पा ठं॰ सव्याय च रजस्याय च स्वाहा ।।१३१।।
ॐ नमो लोप्प्याय चोलप्प्याय च स्वाहा ।।१३२।।
ॐ नमऽ ऊर्व्व्याय च सूर्व्व्याय च स्वाहा ।।१३३।।
ॐ नमः पर्ण्णाय च पर्ण्णशदाय च स्वाहा ।।१३४।।
ॐ नमऽ उद्गुरमाणाय चाभिग्घ्नते च स्वाहा ।।१३५।।
ॐ नमऽ आखिदते च प्रखिदते च स्वाहा ।।१३६।।
ॐ नमऽ इषुकृद्ब्भ्यो धनुष्कृद्ब्भ्यश्श्च वो नमः स्वाहा ।।१३७।।
ॐ नमो वः किरिकेब्भ्यो देवाना ठं हृदयेब्भ्यो स्वाहा ।।१३८।।
ॐ नमो व्विचिन्वत्केब्भ्यो देवाना ठं हृदयेब्भ्यो स्वाहा ।।१३९।।
ॐ नमो व्विक्षिणत्केब्भ्यो देवाना ठं हृदयेब्भ्यो स्वाहा ।।१४०।।
ॐ नमः आनिर्हतेब्भ्यो देवाना ठं हृदयेब्भ्यो स्वाहा ।।१४१।।

ॐ द्रापेऽअन्धसस्प्पते दरिद्द्र नीललोहित। आसाम्प्रजानामेषाम्पशुनाम्मा भेर्म्मा रोङ्मोचनः किञ्चनाममत् स्वाहा।।१४२।।

ॐ इमारुद्द्राय तवसे कपर्द्दिने क्षयद्वीराय प्प्रभरामहे मतीः। यथा शमसद् द्विपदे चतुष्पदे व्विश्श्वम्पुष्ट्टङ्ग्रामेऽ अस्मिन्न्नातुरम् स्वाहा।।१४३।।

ॐ या ते रुद्द्र शिवा तनूः शिवा व्विश्श्वाहा भेषजी। शिवा रुतस्य भेषजी तया नो मृड जीवसे स्वाहा।।१४४।।

ॐ परि नो रुद्द्रस्य हे तिर्व्वृणक्कु परित्त्वेषस्य दुर्म्मतिरघायोः। अवस्थिरा मधवद्ब्भ्यस्तनुष्व मीढवस्तोकाय तनयाय मृड स्वाहा।।१४५।।

ॐ मीढुष्ट्टम शिवतम शिवो नः सुमना भव परमेव्वृक्षऽआयुधन्निधाय कृत्तिं व्वसानऽआचर पिनाकम्बिब्भ्रदागहि स्वाहा।।१४६।।
ॐ व्विकिरिद्द्र व्विलोहित नमस्तेऽ अस्तु भगवः। यास्ते सहस्त्र ठं हेतयोऽन्यम्म्मन्निवपन्तुताः स्वाहा।।१४७।।
ॐ सहस्राणि सहस्त्रशो बाह्वोस्तव हेतयः। तासामीशानो भगवः पराचीना मुखा कृधि स्वाहा।।१४८।।
ॐ अङ्ख्याता सहस्राणि ये रुद्द्रा अधि भूम्म्याम्। तेषा ठं॰ सहस्त्रयोजनेऽव धन्वानि तन्मसि स्वाहा।।१४९।।
ॐ अस्मिन्न्महत्यर्ण्णवेऽन्तरिक्षे भवाऽ अधि। तेषा ठं॰ सहस्त्रयोजनेऽव धन्वानि तन्मसि स्वाहा।।१५०।।
ॐ नीलग्ग्रीवाः शितिकण्ठाः दिव ठं॰ रुद्द्राऽउपश्रिश्रताः। तेषा ठं॰ सहस्त्रयोजनेऽव धन्वानि तन्मसि स्वाहा।।१५१।।
ॐ नीलग्ग्रीवाः शितिकण्ठाः शर्व्वाऽअधः क्षमाचराः। तेषा ठं॰ सहस्त्रयोजनेऽव धन्वानि तन्मसि स्वाहा।।१५२।।
ॐ ये व्वृक्षेषु शष्प्पिञ्जरा नीलग्ग्रीवा व्विलोहिताः। तेषा ठं॰ सहस्त्रयोजनेऽव धन्वानि तन्मसि स्वाहा।।१५३।।
ॐ ये भूतानामधिपतयोव्विशिखासः कपर्द्दिनः। तेषा ठं॰ सहस्त्रयोजनेऽव धन्वानि तन्मसि स्वाहा।।१५४।।
ॐ ये पथाम्पथिरक्षयऽ ऐलवृदाऽ आयुर्य्युधः। तेषा ठं॰ सहस्त्रयोजनेऽव धन्वानि तन्मसि स्वाहा।।१५५।।
ॐ ये तीर्त्थानि प्प्रचरन्ति सृकाहस्ता निषङ्गिणः। तेषा ठं॰ सहस्त्रयोजनेऽव धन्वानि तन्मसि स्वाहा।।१५६।।
ॐ येऽन्नेषु विविद्धयन्ति पात्रेषु पिबतो जनान्। तेषा ठं॰ सहस्त्रयोजनेऽव धन्वानि तन्मसि स्वाहा।।१५७।।
ॐ येऽएतावन्तश्श्च भूया ठं॰ सश्श्च दिशो रुद्द्रा व्वितस्थिरे। तेषा ठं॰ सहस्त्रयोजनेऽव धन्वानि तन्मसि स्वाहा।।१५८।।
ॐ नमोऽस्तु रुद्द्रेब्भ्यो ये दिवि येषां व्वर्षमिषवः तेब्भ्यो दश प्प्राचीर्द्दश दक्षिणा दश प्प्रतीचीर्द्दशोदीचीर्द्दशोद्ध्वाः। तेब्भ्यो नमोऽ अस्तु ते नोऽवन्तु ते नो मृडयन्तु ते यन्द्विष्म्मो यश्च्चनो द्वेष्ट्टि तमेषाञ्जम्भे दद्ध्मः स्वाहा।।१५९।।
ॐ नमोऽस्तु रुद्द्रेब्भ्यो येऽन्तरिक्षे येषां व्वातऽइषवः। तेब्भ्योदश प्प्राचीर्द्दश दक्षिणा दश प्प्रतीचीर्द्दशोदीचीर्द्दशोद्ध्वाः। तेब्भ्यो नमोऽअस्तु ते नोऽवन्तु ते नो मृडयन्तु ते यन्द्विष्म्मो यश्च्चनो द्वेष्ट्टि तमेषाञ्जम्भे दद्ध्मः स्वाहा।।१६०।।

ॐ नमोऽस्तु रुद्द्रेब्भ्यो पृथिव्यां येषामन्नमिषवः। तेब्भ्योदश प्प्राचीर्द्दश दक्षिणा दश प्प्रतीचीर्द्दशोदीचीर्द्दशोद्ध्वाः। तेब्भ्यो नमोऽअस्तु ते नोऽवन्तु ते नो मृडयन्तु ते यन्द्विष्म्मो यश्च्चनो द्वेष्ट्टि तमेषाञ्जम्भे दद्ध्मः स्वाहा।।१६१।।
ॐ व्वय ठं॰ सोम॰ (८ मंत्राः, पाठमात्रम् मतान्तरे एकामाहुतिं जुहुयात्)।। ॐ उग्रश्च॰ (७ मंत्राः, पाठमात्रम्)। ॐ व्वाजश्च॰।।१।। प्प्राणश्च॰।।२।। ओजश्च।।३।। ज्यैठ्यं च॰।।४।। स्वाहा।
(२) ॐ नमस्ते॰ (१६१ आहुतयः)। ॐ सत्यञ्च॰।।१।। ऋतञ्च॰।।२।। यन्ता च॰।।३।। शञ्च।।४।। स्वाहा। (३) ॐ नमस्ते॰ (१६१ आहुतयः)। ॐ ऊर्क्चञ्च॰।।१।। रयिञ्च॰।।२।। वित्तञ्च॰।।३।। व्व्रीहयञ्च।।४।। स्वाहा। (४) ॐ नमस्ते॰ (१६१ आहुतयः)। ॐ अश्मा च॰।।१।। अग्निश्च।।२।। व्वसुच॰।।३।। स्वाहा। (५) ॐ नमस्ते॰ (१६१ आहुतयः)। ॐ अग्निश्च मऽइन्द्रश्च॰।।१।। मित्रश्च॰।।२।। पृथिवी च॰।।३।। स्वाहा। (६) ॐ नमस्ते॰ (१६१ आहुतयः)। ॐ अठं॰ शुश्च॰।।१।। आगग्रयणश्च॰।।२।। स्त्रुवश्च॰।।३।। स्वाहा। (७) ॐ नमस्ते॰ (१६१ आहुतयः)। ॐ अग्निश्च॰।।१।। व्रतश्चम॰।।२।। (८) ॐ नमस्ते॰ (१६१ आहुतयः)। ॐ एका च॰।।१।। (९) ॐ नमस्ते॰ (१६१ आहुतयः)। ॐ चतस्त्रश्च॰।।१।। (१०) ॐ नमस्ते॰ (१६१ आहुतयः)। ॐ त्र्यविश्च।।१।। ॐ षष्ठ्ठवाट् च॰।।२।। स्वाहा। पुनः ॐ यज्जाग्रतः॰ (६ मंत्राः) स्वाहा। ॐ सहस्त्रशीर्षा॰ (१६ मंत्राः) स्वाहा। ॐ अद्भ्यः सम्भृतः॰ (६ मंत्राः) स्वाहा। ॐ आशुः शिशानः (१२ मंत्राः) स्वाहा। ॐ विब्भ्राड् बृहत पिबतु॰ (१७ मंत्राः) स्वाहा। (११) ॐ नमस्ते॰ (१६१ आहुतयः)।
ॐ व्वाजाय॰ स्वाहा।।१।। ॐ आयुर्य्यज्ञेन कल्पताम्॰ स्वाहा।।२।। ॐ ऋचं वाचम्॰ स्वाहा। ॐ यन्मे छिद्रम्॰ स्वाहा। ॐ भू र्भुवः स्वः तत्सवितुः॰ स्वाहा। ॐ कया न श्चित्र॰ स्वाहा। ॐ कस्त्वा सत्यो मदानाम्॰ स्वाहा। ॐ अभीषुणः॰ स्वाहा। ॐ कया त्वन्नऽऊत्याभि॰ स्वाहा। ॐ इंद्रो विश्वस्य॰ स्वाहा। ॐ शं नो मित्रः शं वरुणः॰ स्वाहा। ॐ शन्नो व्वातः पवता ठं शन्नः॰ स्वाहा। ॐ अहानि शं भवतु नः स्वाहा। ॐ शन्नो देवी स्वाहा। ॐ स्योना पृथिवी॰ स्वाहा। ॐ आपो हि ष्ठा॰ स्वाहा। ॐ यो वः शिवतमो रसः स्वाहा। ॐ तस्माऽ अरङ्गमाम वः॰ स्वाहा। ॐ द्यौः शांतिः॰ स्वाहा। ॐ दृते दृठं॰ ह मा मित्रस्य मा चक्षुषा॰ स्वाहा। ॐ दृते दृठं॰ ह मा ज्योक्ते॰ स्वाहा। ॐ नमस्ते हरसे शोचिषे॰ स्वाहा। ॐ नमस्ते अस्तु व्विद्युते॰ स्वाहा। ॐ यतोयतः समीहसे॰ स्वाहा। ॐ सुमित्रिया नऽ आपः॰ स्वाहा। ॐ तच्चक्षुर्देवहितम्॰ स्वाहा। ततः षडङ्गन्यासं कुर्यादिति।
ॐ तत्सत्

# ।।अथ मृत्युञ्जय यंत्रार्चनम्।।

**अथ ध्यानम्ः –** हस्तांभोजयुगस्थकुंभयुगलादुदृत्य तोयं शिरः सिचंतं करयोर्युगेन दधतं स्वांके सकुंभौ करौ। अक्षस्रङ्मृगहस्तमंबुजगतं मूर्द्धस्थचन्द्रस्रवत्पीयूषोन्नतनुं भजे सगिरिजं मृत्युंजयं त्र्यम्बकम्।।

नव पीठादौ रचिते सर्वतोभद्रमण्डले लिङ्गतोभद्रमण्डले वा यन्त्रमध्ये ॐ मं मंडूकादिपर–तत्त्वांतपीठदेवताभ्यो नमः इति पीठदेवताः संपूज्य नव पीठशक्तीः पूजयेत्। तद्यथा। पूर्वादिक्रमेण। ॐ वामायै नमः।।१।। ॐ ज्येष्ठायै नमः।।२।। ॐ रौद्रायै नमः।।३।। ॐ काल्यै नमः।।४।। ॐ कलविकरिण्यै नमः।।५।। ॐ बलविकरिण्यै नमः।।६।। ॐ बलप्रमथिन्यै नमः।।७।। ॐ सर्वभूतदमन्यै नमः।।८।। मध्ये ॐ मनोन्मन्यै नमः।।९।। इति पूजयेत्।

ततः स्वर्णादिनिर्मितं यंत्रं मूर्ति वा ताम्रपात्रे निधाय घृतेनाभ्यज्य तदुपरि दुग्धधारां जलधारां च दत्त्वा स्वच्छवस्त्रेणाशोष्य "ॐ नमो भगवते सकलगुणात्मकशक्तियुताय अनन्ताय योगपीठात्मने नमः।।" इति मंत्रेण

पुष्पाद्यासनं दत्त्वा पीठमध्ये संस्थाप्य प्रतिष्ठां च कृत्वा पुनर्ध्यात्वा मूलेन मूर्ति प्रकल्प्य पाद्यादिपुष्पां तैरुपचारैः संपूज्य देवाज्ञया आवरणपूजां कुर्य्यात्। तद्यथा – पुष्पांजलिमादाय "सचिन्मयः परो देवः परामृतरसप्रियः।। अनुज्ञां शिव मे देहि परिवारार्चनाय ते।।१।।" इत्याज्ञां गृहीत्वा पुष्पांजलिं च दत्त्वा आवरणपूजाकुर्य्यात्।।

**पंचकोणे। ऐशान्याम् –** ॐ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपति ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम्।। ॐ ईशानाय नमः। ईशानश्रीपादुकां पूजयामि तर्पयामि।। इति सर्वत्र।।१।।

**पूर्वे –** ॐ तत्पुरुषाय विद्महे महादेवाय धीमहि।। तन्नो रुद्र प्रचोदयात्।। ॐ तत्पुरुषाय नमः। तत्पुरुषश्रीपा॰।।२।।

**दक्षिणे –** ॐ अघोरेभ्योऽथ घोरभ्यो घोरघोरतरेभ्यः।। सर्वेभ्यः सर्व्वशर्व्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः।। ॐ अघोराय नमः। अघोरश्रीपा॰।।३।।

**पश्चिमे –** ॐ वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः।। ॐ वामदेवाय नमः। वामदेवश्रीपा॰।।४।।

**उत्तरे –** ॐ सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः। भवे भवे नातिभवे भवस्व मां भवोद्भवाय नमः।। ॐ सद्योजाताय नमः। सद्योजातश्रीपा॰ ।।५।। (इति पंचमूर्तिः पूजयेत)।।

ततः पुष्पांजलिमादाय मूलमुच्चार्य्य 'अभीष्टसिद्धिं मे देहि शरणगतवत्सल।। भक्त्या

समर्पये तुभ्यं प्रथमावरणार्चनम्।।१।। इतिपठित्वा पुष्पांजलि च दत्वा विशेषार्घाबिन्दुं निःक्षिप्य पूजितास्तर्पिताः संतु इति वदेत्। (इति प्रथमावरणम्)।।१।। ततः पंचकोणाग्रेषु ऐशान्यादिक्रमेण। ॐ निवृत्त्यै नमः। निवृत्तिश्रीपा॰ ।।१।। ॐ प्रतिष्ठायै नमः। प्रतिष्ठाश्रीपा॰ ।।२।। ॐ विद्यायै नमः विद्याश्रीपा॰ ।।३।। ॐ शांत्यै नमः। शांतिश्रीपा॰ ।।४।। ॐ शांत्यतीतायै नमः। शांत्यतीताश्रीपा॰ ।।५।। इति पूजयित्वा पुष्पांजलिं च दद्यात्। (इति द्वितीयावरणम्)।।२।। ततोऽष्टदले पूज्य पूजकयोरंतराले प्राचीं तदनुसारेण अन्या दिशः प्रकल्प्य प्राचीक्रमेण। ॐ सूर्य्यमूर्तये नमः। सूर्य्यमूर्तिश्रीपा॰ ।।१।। ॐ इन्दुमूर्तये नमः इन्दुमूर्तिश्रीपा॰ ।।२।। ॐ क्षितिमूर्तये नमः। क्षितिमूर्तिश्रीपा॰ ।।३।। ॐ तोयमूर्तये नमः। तोयमूर्तिश्रीपा॰ ।।४।। ॐ अग्निमूर्तये नमः। अग्निमूर्तिश्रीपा॰ ।।५।। ॐ पवनमूर्तये नमः। पवनमूर्तिश्रीपा॰ ।।६।। ॐ आकाशमूर्तये नमः। आकाशमूर्तिक्षीपा॰ ।।७।। ॐ यज्ञमूर्तये नमः। यज्ञमूर्तिश्रीपा॰।।८।। इत्यष्टौ मूर्तीः पूजयित्वा पुष्पांजलिं च दद्यात्। (इति तृतीयावरणम्)।।३।। तद्वहिरष्टदले प्राचीक्रमेण – ॐ रमायै नमः। रमाश्रीपा॰।।१।। ॐ राकायै नमः। राकाश्रीपा॰।।२।। ॐ प्रभायै नमः। प्रभाश्रीपा॰।।३।। ॐ ज्योत्स्नायै नमः। ज्योत्स्नाश्रीपा॰।।४।। ॐ पूर्णायै नमः। पूर्णाश्रीपा॰।।५।। ॐ पूषायै नमः। पूषाश्रीपा॰।।६।। ॐ पूर्ण्यै नमः। पूर्णाश्रीपा॰।।७।। ॐ सुधायै नमः। सुधाश्रीपा॰।।८।। इति पूजयित्वा पुष्पाजलिं च दद्यात्।। (इति चतुर्थावरणम्)।।४।। तद्वहिरष्टदले प्राचीक्रमेण। ॐ विश्वायै नमः विश्वाश्रीपा॰।।१।। ॐ वंद्यायै नमः। वंद्याश्रीपा॰।।२।। ॐ सितायै नमः। सिताश्रीपा॰।।३।। ॐ प्रह्लायै नमः। प्रह्लाश्रीपा॰।।४।। ॐ सारायै नमः। साराश्रीपा॰।।५।। ॐ संध्यायै नमः। संध्याश्रीपा॰।।६।। ॐ शिवायै नमः। शिवाश्रीपा॰।।७।। ॐ निशायै नमः। निशाश्रीपा॰।।८।। इत्यष्टौ पूजयित्वा पुष्पांजलिं च दद्यात्।। (इति पंचमावरणम्)।।५।। तद्वहिरष्टदलेप्राचीक्रमेण। ॐ आर्य्यायै नमः। आर्य्याश्रीपा॰।।१।। ॐ प्रज्ञायै नमः। प्रज्ञाश्रीपा॰।।२।। ॐ प्रभायै नमः। प्रभाश्रीपा॰।।३।। ॐ धृत्यै नमः। धृतिश्रीपा॰।।३।। ॐ मेधायै नमः। मेधाश्रीपा॰।।४।। ॐ शांत्यै नमः। शांतिश्रीपा॰।।५।। ॐ कांत्यै नमः। कांतिश्रीपा॰।।६।। ॐ धृत्यै नमः। धृतिश्रीपा॰।।७।। ॐ मत्यै नमः। मतिश्रीपा॰।।८।। इत्यष्टौ पूजयित्वा पुष्पांजलिं च दद्यात्। (इति षष्ठावरणम्)।।६।। तद्वहिरष्टदले प्राचीक्रमेण। ॐ धरायै नमः। धराश्रीपा॰।।१।। ॐ उमायै नमः। उमाश्रीपा॰।।२।। ॐ पावनयै नमः। पावनीश्रीपा॰।।३।। ॐ पद्मायै नमः। पद्माश्रीपा॰।।४।। ॐ शांतायै नमः। शांताश्रीपा॰।।५।। ॐ अमोघायै नमः। अमोघाश्रीपा॰।।६।। ॐ जयायै नमः। जयाश्रीपा॰।।७।। ॐ अमलायै नमः। अमलाश्रीपा॰।।८।। इत्यष्टौ पूजयित्वा पुष्पांजलिं च दद्यात्।। (इति सप्तमावरणम्)।।७।। तद्वहिरष्टदले प्राचीक्रमेण। ॐ अनंताय नमः। अनंतश्रीपा॰।।१।। ॐ सूक्ष्मसंज्ञय नमः।

सूक्ष्मसंज्ञश्रीपा॰।।२।। ॐ शिवोत्तमाय नमः। शिवोतमंश्रीपा॰।।३।। ॐ एकनेत्राय नमः। एकनेत्रश्रीपा॰।।४।। ॐ एकरुद्राय नमः। एकरुद्रश्रीपा॰।।५।। ॐ त्रिमूर्तये नमः। त्रिमूर्तिश्रीपा॰।।६।। ॐ श्रीकंठाय नमः। श्रीकंठश्रीपा॰।।७।। ॐ शिखंडिने नमः। शिखंडिश्रीपा॰।।८।। इत्यष्टौ पूजयित्वा पुष्पांजलिं च दद्यात्।। (इत्यष्टमावरणम्)।।८।। तद्वहिरष्टदले उत्तरामारभ्य ॐ उमायै नमः। उमाश्रीपा॰।।१।। ॐ चण्डेश्वराय नमः। चण्डेश्वरश्रीपा॰।।२।। ॐ नंदिने नमः। नंदिश्रीपा॰।।३।। ॐ महाकालाय नमः। महाकालश्रीपा॰।।४।। ॐ गणेशाय नमः। गणेशश्रीपा॰।।५।। ॐ वृषभाय नमः। वृषभश्रीपा॰।।६।। ॐ भृंगिरिटये नमः। भृंगिरिटिश्रीपा॰।।७।। ॐ स्कंदाय नमः। स्कंदश्रीपा॰।।८।। इत्यष्टौ पूजयित्वा पुष्पांजलिं च दद्यात्।। (इति नवमावरणम्)।।९।। तद्वहिरष्टदले प्राचीक्रमेण। ॐ ब्राह्मयै नमः। ब्राह्मीश्रीपा॰।।१।। ॐ माहेश्वर्य्यै नमः। माहेश्वरीश्रीपा॰।।२।। ॐ कौमार्यै नमः। कौमारीश्रीपा॰।।३।। ॐ वैष्णव्यै नमः। वैष्णवीश्रीपा॰।।४।। ॐ वाराह्यै नमः। वाराहीश्रीपा॰।।५।। ॐ इन्द्राण्यै नमः। इन्द्राणीश्रीपा॰।।६।। ॐ चामुंडायै नमः। चामुण्डाश्रीपा॰।।७।। ॐ महालक्ष्म्यै नमः। महालक्ष्मीश्रीपा॰।।८।। इत्यष्टौ पूजयित्वा पुष्पांजलिं च दद्यात्।। (इति दशमावरणम्)।।१०।। तद्वाह्ये भूपुरे पूर्वादिक्रमेण इन्द्रादिदशदिक्पालान् वज्राद्यायुधानि च पूजयित्वा पुष्पांजलि दद्यात्। इत्यावरणपूजां कृत्वा धूपादिनमस्कारांतां संपूज्य कृतांजलिः

**प्रार्थयेत् -** ॐ मृत्युंजय महारुद्रत्राहिमां शरणागतम्।। जन्ममृत्यु-जरारोगैः पीडितं कर्मबंधनैः।।१।। तावकस्त्वद्गतप्राणास्त्वच्चित्तोऽहं सदा मृड।। इति विज्ञाप्य देवेशं जपेनमृत्युंजयं परम्।।२।। (इति संप्रार्थ्य जपं कुर्य्यात् ) अस्य पुरश्चरणमेकलक्षजपः।

# अथ मृत्युञ्जय ( महामृत्यञ्जय ) मन्त्रः प्रयोग

ॐ अस्य श्री महामृत्यञ्जय मन्त्रस्य वशिष्ठ ऋषिः अनुष्टुप्छन्दः श्री त्र्यम्बकं-रुद्रोदेवता हौं बीजम् जूं शक्तिः सः कीलकं मम वा यजमानस्य शरीरे सर्वारिष्ट-निवृतिपूर्वक सकल मनोरथ सिद्ध्यर्थे जपे विनियोगः

**ऋष्यादिन्यासाः** वसिष्ठ ऋषये नमः शिरसि। अनुष्टुप् छन्दसे नमः मुखे। श्रीमृत्युंजय रुद्रदेवतायै नमो हृदये। हौं बीजाय नमः गुह्ये। जूं शक्तये नमः पादयोः। सः कीलकाय नमः सर्वांगेषु।

**करादिन्यासाः** ॐ त्र्यम्बकम् अंगुष्ठाभ्यां नमः। यजामहे तर्जनीभ्यां नमः। सुगंधिं पुष्टिवर्धनम् मध्यमाभ्यां नमः। उर्वारुकमिव बंधनात् अनामिकाभ्यां नमः। मृत्योर्मुक्षीय कनिष्ठिकाभ्यां नमः। मामृतात् करतलकरपृष्ठाभ्यां नमः।

**एवं हृदयादिन्यासा:। अक्षरन्यास:** ॐ त्र्यं नम: पूर्वमुखे। ॐ बं नम: पश्चिममुखे। ॐ कं नम: दक्षिणमुखे। ॐ यं नम: उत्तरमुखे। ॐ जां नम: शिरसि। ॐ मं नम: कंठे। ॐ हें नम: मुखे। ॐ सुं नम: नाभौ। ॐ गं नम: हृदि। ॐ धिं नम: पृष्ठे। ॐ पुं नम: कुक्षौ। ॐ ष्टिं नम: लिंगे। ॐ वं नम: गुदे। ॐ धं नम: दक्षिणोरुमूले। ॐ नं नम: वामोरुमूले। ॐ उं नम: दक्षिणोरुमध्ये। ॐ वां नम: वामोरुमध्ये। ॐ रुं नम: दक्षिणजानुनि। ॐ कं नम: वामजानुनि। ॐ मिं नम: दक्षिणजानुवृत्ते। ॐ वं नम: वामजानुवृत्ते। ॐ बं नम: दक्षिणस्तने। ॐ धं नम: वामस्तने। ॐ नां नम: दक्षिणपार्श्वे। ॐ मृं नम: वामपार्श्वे। ॐ त्यों नम: दक्षिणपादे। ॐ मुं नम: वामपादे। ॐ क्षीं नम: दक्षिण करे। ॐ यं नम: वामकरे। ॐ मां नम: दक्षिणनासायाम्। ॐ मृं नम: वामनासायाम्। ॐ तां नम: मूर्ध्नि।
**पदन्यास:** ॐ त्र्यम्बकं शिरसि। ॐ यजामहे भ्रुवो:। ॐ सुगंधिं नेत्रयो:। ॐ पुष्टिवर्धनम् मुखे। ॐ उर्वारुकं गण्डयो:। ॐ इव हृदये। ॐ बंधनात् जठरे। ॐ मृत्यो: लिंगे। ॐ मुक्षीय हृदये। ॐ मां जान्वो:। ॐ अमृतात् पादयो:।
**महामृत्युंजयमंत्रकरन्यास –** ॐ हौं ॐ जूं स: ॐ भूर्भुव: स्व: ॐ त्र्यम्बकं ॐ नमो भगवते रुद्राय शूलपाणये स्वाहा अंगुष्ठाभ्यां नम:। ॐ हौं ॐ जूं स: ॐ भूर्भुव: स्व: यजामहे ॐ नमो भगवते रुद्राय अमृतमूर्तये मांजीवय तर्जनीभ्यां नम:। ॐ हौं ॐ जूं स: ॐ भूर्भुव: स्व: सुगंधिं पुष्टिवर्धनम् ॐ नमो भगवते रुद्राय चन्द्रशिरसे जटिने स्वाहा मध्यमाभ्यां नम:। ॐ हौं ॐ जूं स: ॐ भूर्भुव: स्व: उर्वारुकमिव बंधनात् ॐ नमो भगवते रुद्राय त्रिपुरान्तकाय ह्रां ह्रीं अनामिकाभ्यां नम:। ॐ हौं ॐ जूं स: ॐ भूर्भुव: स्व: मृत्योर्मुक्षीय ॐ नमो भगवते रुद्राय त्रिलोचनाय ऋग्यजु: साम मंत्राय कनिष्ठिकाभ्यां नम:। ॐ हौं ॐ जूं स: ॐ भूर्भुव: स्व: मामृतात् ॐ नमो भगवते रुद्राय ॐ अग्नित्रयाय ज्वलज्वल मां रक्ष रक्ष अघोरास्त्राय करतलकरपृष्ठाभ्यां नम:। एवं हृदयादि न्यासा:।
**ध्यानम् –** हस्ताभ्यां कलशद्वयामृतरसै:, आप्लावयन्तं शिर:, द्वाभ्यां तौ दधतं मृगाक्षवलये द्वाभ्यां वहन्तं परम्। अंके न्यस्तकरद्वयामृतघटं कैलासकान्तं शिवं स्वच्छांभोजगतं नवेन्दुमुकुटं देवं त्रिनेत्रं भजे।।
इति ध्यात्वा यथा लब्धोपचारै सम्पूज्य – माला पूजनं एवं मूल मन्त्र जपेत्।
**षट् प्रणवसंयुक्त: मृत्युञ्जयमंत्र –** ॐ हौं जूं स: ॐ भूर्भुव: स्व: ॐ त्र्यम्बकं यजामहे सुगंधिं पुष्टिवर्धनम्। उर्व्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात ॐ स्व: भुव: भू: ॐ स: जूं हौं ॐ (५२) वर्णात्मको मृत संजीवनी मन्त्र:।।

**चतुर्दशप्रणवयुक्त महामृत्युंजयमंत्र -** ॐ हौं ॐ जूं ॐ सः ॐ भूः ॐ भुवः ॐ स्वः ॐ त्र्यम्बकं यजामहे सुगंधिं पुष्टिवर्धनम् उर्व्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात ॐ स्वः ॐ भुवः ॐ भूः ॐ सः ॐ जूं ॐ हौं ॐ।।(६२) वर्णात्मको महामृत्युञ्जयः।। (शुक्राराधितो)
**मृत्युंजय मंत्र -** ॐ भूः ॐ भुवः ॐ स्वः ॐ त्र्यंबकं यजामहे सुगंधिं पुष्टिवर्धनम्। उर्व्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात ॐ स्वः ॐ भुवः ॐ भूः ॐ।।(४८) वर्णात्मक केवलमृत्युञ्जयः।।
(**द्वादशाक्षरो मृत्युञ्जयः मन्त्रः -** ।।ॐ जूँ सः पालय पालय सः जूँ ॐ।।
**त्र्यक्षरी मृत्यञ्जय मन्त्रः -** ।।ॐ जूँ सः सः जूँ ॐ।।)
**पुराणोक्त मृत्युंजय मंत्र -** ह्रीं मृत्युंजय महादेव त्राहि मां शरणागतम्। जन्ममृत्यु-जराव्याधि-पीडितं कर्मबंधनैः।
(जप करते समय मंत्र के अर्थ का ध्यान रहे - हे त्रिनेत्र, मैं आप का यजन करता हूं। आप सुगंधयुक्त एवं पुष्टिवर्धक हो। जैसे ककड़ी का फल बंधन से स्वयं मुक्त हो जाता है, वैसे हम मृत्यु (के भय से) मुक्त बनें। हमें अमृतत्व की प्राप्ति हो। हम सदैव आप का स्मरण करते रहें। पुराणोक्त मंत्र का अर्थ भी सरल है। मैं आप की शरण में आया हूं। आप मुझे सभी विपत्तियों से मुक्त करें। जप पश्चात् षडंगन्यास, मृत्युंजय कवच पाठ पश्चात् जपनिवेदन।)
गुह्यातिगुह्य गोप्ता त्वं गृहाणास्मत् कृतं जपम्। सिद्धिर्भवतु मे देव त्वत्प्रसादान्महेश्वर।।
**सकंल्प -** अनेन जपाख्येन कर्मणा श्री महामृत्युंजयः प्रीयताम्।
(विविध रोग की शांति के लिए वसिष्ठ कल्प एवं शांतिरत्न में विविध पदार्थों से होम करने का विधान है। ऐसा भी विधान है कि आयुर्वेद में जिस औषध का रोगशान्त्यर्थ विधान हो उस का होम करें।)
(लक्षमंत्र का पुरश्चरण पश्चात् दशांश होम, तत् दशांश तर्पण (ॐ त्र्यंबकं देवं तर्पयामि), तद्दशांश मार्जन (आत्मानं अभिषिंचामि) व तत्दशांश ब्रह्मभोजन हो। होम के लिए कामना अनुसार द्रव्य का विधान इस प्रकार है। बिल्वसमधि-संपत्ति, पलाश-ब्रह्मतेज, खदिर-कान्ति और पुष्टि, वटसमिध-धनधान्यसमृद्धि, तिल-पापनाश, सर्षप-शत्रुविजय, पायस-रक्षा, श्री, कीर्ति व कान्ति। जन्मदिन पर पायस, तिल, घृत आदि का होम करने से लक्ष्मी, आरोग्य, यशप्राप्ति होती है। मंत्र जप सभी प्रकार की इष्टसिद्धि करता है।)

।। इति महामृत्युञ्जय विधानम्।।

# ।।शतरुद्रियम्।।

ॐ नमस्ते... जम्भेदध्म: ।।६६।। मन्त्र

ॐ वय ठं॰ सोम व्रते तव मनस्तनूषु बिभ्रत:। प्रजावन्त: सचेमहि।। एष ते रुद्र भाग: सह स्वस्राम्बिकया तं जुषस्व स्वाहै ष ते रुद्र भागऽआखुस्ते पशु:।। अव रुद्रमदीमह्यव देवं त्र्यम्बकम्। यथा नो वस्यसस्करद्यथा न: श्रेयसस्करद्यथा नो व्यवसाययात्।। भेषजमसि भेषजं गवेऽश्वाय पुरुषाय भेषजम्। सुखं मेषाय मेष्यै।। त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्। त्र्यम्बकं यजामहे सुगन्धिं पतिवेदनम्। उर्वारुकमिव बन्धनादितो मुक्षीय मामुत:।। एतत्ते रुद्रावसं तेन परो मूजवतोऽतीहि। अवततधन्वा पिनाकावस: कृत्तिवासा अहि ठं॰ सन्न: शिवोऽतीहि।। त्र्यायुषं जमदग्ने: कश्यपस्य त्र्यायुषम्। यद्देवेषु त्र्यायुषं तन्नोऽअस्तु त्र्यायुषम्।। शिवो नामासि स्वधितिस्ते पिता नमस्तेऽअस्तु मा मा हि ठं॰ सी: नि वर्त्तयाम्यायुषेऽन्नाद्याय प्रजननाय रायस्पोषाय सुप्रजास्त्वाय सुवीर्य्याय।।

नमस्ते रुद्र... सदमित्वाहवामहे – (१६) मन्त्र

एष ते रुद्र भाग: सह स्वस्राम्बिकया तं जुषस्व स्वाहै ष ते रुद्र भागऽआखुस्ते पशु:।। अव रुद्रमदीमह्यव देवं त्र्यम्बकम्। यथा नो वस्यसस्करद्यथा न: श्रेयसस्करद्यथा नो व्यवसाययात्।।

नमस्ते रुद्र... मुतते नम: – (१)

याते रुद्र... गिरिशन्ताभिचाकशीहि – (२)

न तं विदाथ य ऽ इमा जजानान्यद्युष्माकमन्तरं बभूव। नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति।। विश्वकर्मा ह्यजनिष्ट देवऽआदिद्गन्धर्वो अभवद् द्वितीय:। तृतीय: पिता जनितौषधीनामपां गर्भं व्यदधात् पुरुत्रा।।

मीढुष्टम् शिवतम शिवो न: सुमना भव। परमे वृक्ष आयुधं निधाय कृत्तिं वसानऽआ चर पिनाकं बिभ्रदा गहि।। विकिरिद्र विलोहित नमस्तेऽअस्तु भगव:। यास्ते सहस्र ठं॰ हेतयोऽन्यमस्मन्नि वपन्तु ता:।। सहस्राणि सहस्रशो बाह्वोस्तव हेतय:। तासामीशानो भगव: पराचीना मुखा कृधि।। असंख्याता सहस्राणि ये रुद्राऽअधि भूम्याम्। तेषा ठं॰ सहस्रयोजनेऽव धन्वानि तन्मसि।।१००।।

# अथ नूतन गृहादीनां शिलास्थापन विधि

तत्रकर्ता निश्चित वा आग्नेय दिशि खात भूमेः पश्चिम उपविश्य आचम्य प्राणानायम्य स्वस्ति वाचयित्वा प्रतिज्ञा सङ्कल्पं कुर्यात् – देशकालौ संकीर्त्य – करिष्य माणस्यास्य वास्तोः शुभतासिद्धयर्थम् निर्विघ्नता गृह (प्रासाद) सिद्धयर्थं मायुरारोग्यैश्वर्य्याभि वृद्धयर्थम् च वास्तोस्तस्य भूमि पूजनं शिलान्यासञ्च करिष्ये। तदङ्गभूतं श्री गणपत्यादि पूजनञ्च करिष्ये। इति सङ्कलप्य।। गणेश वरुण षोडशमातृका ब्रह्मादि सूर्यादि नवग्रह ओङ्कार मृत्युञ्जयादि पूजनं कुर्यात्।

तत आचार्यः ॐ अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया।। अनेन गौरसर्षपानवकीर्य पञ्चगव्येन संप्रोक्ष्य वायुकोणपीठे पञ्चशिलाः स्थापयेत्। ततः सर्पाकारं वास्तुमावाह्य ॐ वास्तोष्पते प्रतिजानीह्यस्मान्स्वावेशोऽनमीवो भवा नः।। यत्वेमहे प्रति तन्नो जुषस्व शन्नो भव द्विपदे शं चतुष्पदे।। इति मन्त्रेण सम्पूज्य दध्योदनबलिर्देयः ततो नागानां पूजनम्।। ॐ वासुकिं धृतराष्ट्रञ्च कर्कोटकधनञ्जयौ। तक्षकैरावतौ चैव कालेयमणिभद्रकौ।। इत्यष्टनागान् पृथक् पृथक् सहैव वा नाममन्त्रेणावाह्य पूजयेत।। ततो धर्मरूपवृषमावाह्य सम्पूज्य चाञ्जलि बद्धवा प्रार्थयेत् – ॐ धर्मोसि धर्मदैवत्य वृषरूप नमोस्तु ते। सुखं देहि धनं देहि देहि पुत्रमनुत्तमम।। गृहे गृहे निधिं देहि वृषरूप नमोस्तु ते। आयुर्वृद्धि च धान्यं च आरोग्यं देहगेहयोः।। आरोग्यं मम भार्याया पितृमातृसुखं सदा। भ्रातॄणां परमं सौख्य पुत्राणां सौख्यमेव च।। सर्वस्वं देहि मे विष्णो गृहे संविशतां प्रभो। नवग्रहयुतां भूमि पालयस्व वरप्रद।। ततः ताः पञ्चशिलाः – ॐ आपः शुद्धा ब्रह्मरूपाः पावयन्ति जगत्त्रयम्। ताभिरद्भिः शिलां स्नाप्य स्थापयामि शुभे स्थले। इति शुद्धोदकेन प्रक्षाल्य ॐ गजाश्वरथ्यावल्मीकसद्भिर्मृद्भिः शिलेष्टकान् प्रक्षालयामि शुद्धयर्थं गृहनिर्माणकर्मणि।। इति सप्तमृत्तिकाभिः प्रक्षालयेत्।। ततो गायत्र्या पञ्चगव्येन दध्ना तीर्थोदकेन च प्रक्षाल्य शुद्धवस्त्रेण संमार्ज्य ताः शिलाः कुङ्कुम चन्दनाभ्यां विलिप्य, वस्त्रेणाऽऽछाद्य नामभिः पूजयेत्। तत्र नामानि। नन्दा भद्रा जया रिक्ता पूर्णा नामा यथा–क्रमम्। नन्दायां पद्ममालिख्य भद्रा सिंहासनं तथा।। जयायां तारणं छत्र रिक्तायां कूर्ममेव च। पूर्णायां तु चतुर्बाहु विष्णु सलेखयेद् बुधः।। ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः। एते पञ्चैव पञ्चेषु भूतानामावाहयेत् पुनः।।

ॐ नन्दायै नमः (१) ॐ भद्रायै नमः (२) ॐ जयायै नमः (३) ॐ रिक्तायै नमः (४) ॐ पूर्णायै नमः (५) इति नामभिः पूजयेत्। नंदायां पद्ममालिख्यं भद्रा सिंहासनं तथा। जयायां तोरणं क्षत्रं रिक्तायां कूर्ममेव च। पूर्णायां तु चतुर्बाहुं विष्णु संलेखयेत् बुधः।

तासां पञ्चानां सन्निधावेते पञ्च कुम्भाः स्थाप्याः ॐ पद्माय नमः (१) ॐ महापद्माय नमः (२) ॐ शंखाय नमः (३) ॐ मकराय नमः (४) ॐ समुद्राय नमः (५) ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः। एते पञ्चैव पंचेषु भूतानावाहयेत् बुधः।। तत आचार्यः खातभूमिमुपलिप्य तत्र ध्यायेत् कूर्मपृष्ठोपरि स्थितां शुक्लवर्णां चतुर्भुजां पद्मशंखचक्रशूलधरां भूमिं ध्यात्वा ॐ स्योना पृथिवि नो भवानृक्षरानिवेशनी यच्छा नः शर्म सप्रथाः। इति भूमिमावाहयेत्। ततः नाममन्त्रैः ॐ कूर्माय नमः इति कूर्मम् (१) ॐ अनन्ताय नमः इति अनन्तम् (२) ॐ वराहाय नमः इति वराहम् (३) इत्यावाह्य आसनाद्युपचारैः सम्पूज्य भूम्यै अर्घं दद्यात् - जानुभ्यां धरणीं स्पृष्ट्वा तोयक्षीर-तिलतण्डुलयवसर्षपपुष्पाणि अर्घपात्रे प्रक्षिप्य - ॐ हिरण्यगर्भे वसुधे शेषस्योपरि शायिनी। उद्घृतासि वराहेण सशैलवनकानना।। प्रासादं (गृहं वा) कारयाम्यद्य त्वदूर्ध्वं शुभलक्षणम्।। गृहाणार्घ्यं मया दत्त प्रसन्ना शुभदा भव।। भूम्यै नमः इदमर्घ्यं समर्पयामि। ततः भूम्यै आम्र (वा पलाश) पत्रोपरि सदीपं घृतौदनबलिं दत्त्वा प्रार्थयेत् ॐ समुद्रमेखले देवि पर्वतस्तनमण्डले। विष्णु-पत्नि नमस्तुभ्यं शस्त्रपात क्षमस्व मे। इष्ट मेत्वं प्रयच्छेष्ट त्वामह शरणं गतः। पुत्रदारधनायुष्यधर्मवृद्धिकरी भव।। ततः खाते स्नेहं दत्वा तस्योपरि गौरसर्षपान् क्षिपेत्। तत्र मन्त्रः ॐ भूतप्रेतपिशाचाद्या अपक्रामन्तु राक्षसाः। स्थानादस्माद्व्रजन्त्वन्यत्स्वीकरोमि भुवं त्विमाम्।। तस्योपरि दध्योदनं भक्तमाषान्नबलिं च दत्त्वा तस्योपरि पर्णपात्राणि ७ संस्थाप्य तस्योपरि द्वादशांगुललोहशंकुं भूमौ प्राविशेत्। तत्र मन्त्रः ॐ विशन्तु भूतले नागाः लोकपालाश्च सर्वतः। अस्मिन् स्थानेऽवतिष्ठन्तु आयुर्बलकराः सदा। इति कीलकं निखन्य तस्योपरि मध्वाज्यपारदसुवर्णं (मुद्रा वा) पंचरत्नगर्भगन्धादिभूषितं सुपूजितं ताम्रादि निर्मितं पद्माख्यकुम्भं पिहितमुखं कुसुंभवस्त्रवेष्टितं नालिकेरयुतं मध्ये स्थापयेत्। एवं पूर्वादिचतुर्दिक्षु चत्वारः कुम्भाः स्थाप्याः। पूर्वादिषु क्रमेण महापद्म २, शंखं ३, मकरं ४, समुद्र ५, च सम्पूज्य तदुपरि कुंभसमां मृत्तिकां दत्त्वा अक्षतान् क्षिपेत्। ततः सुलग्ने मध्ये सुपूजितां पूर्णाख्यामिष्टकां स्थापयेत् तत्र मन्त्रः- ॐ पूर्णे त्वं सर्वदा भद्रे सर्वसन्दाहलक्षणे। सर्वं सम्पूर्णमेवात्र कुरुष्वाङ्गिरसः सुते।। ततः पूर्वस्या - ॐ नन्दे त्वं नन्दिनी पुंसां त्वामत्र स्थापयाम्यहम्। अस्मिन् रक्षा त्वया कार्या प्रासादे यत्नतो मम।। ततो दक्षिणस्यां - ॐ भद्रे त्वं सर्वदा भद्रं लोकानां कुरु काश्यपि। आयुर्दा कामदा देवि सुखदा च सदा भव।। ततः पश्चिमायां - ॐ जये त्वं सर्वदा देवि तिष्ठ त्वं स्थापिता मया। नित्यं जयाय भूत्यै च स्वामिनो भव भार्गवि।। तत उत्तरस्यां - रिक्ते त्वरिक्ते दोषघ्ने सिद्धिवृद्धिप्रदे शुभे। सर्वदा सर्वदोषघ्ने तिष्ठास्मिन्मम

मन्दिरे।। इति मन्त्रेण स्थापयित्वा पूर्णादिनाममन्त्रैः गन्धादिना पूजयेत्। ततः परितो दिक्पालान् संपूज्य सदीपदधिमाषतण्डुलबलिं दद्यात्। ततः विश्वकर्मणे नमः इत्यायुधपूजां कृत्वा प्रार्थयेत् - ॐ अज्ञानाज्ज्ञानतो वापि दोषाः स्युश्च यदुद्भवाः। नाशयन्त्वहितान्सर्वान् विश्वकर्मन्नमोस्तु ते।। ततः खनित्रं संपूज्य प्रार्थयेत् ॐ त्वष्ट्रा त्वं निर्मितः पूर्वं लोकानां हितकाम्यया पूजितोऽसि खनित्र त्वं सिद्धिदो भव नो ध्रूवम्।। अथ वास्तोष्पतिमृत्युञ्जयादीनां जपार्थं प्रतिज्ञासंकल्पं कुर्यात् - अद्येत्याद्युक्त्वाअनवधिवर्षावच्छिन्नबहुकालपर्यन्तं पुत्रकलत्रारोग्यधनादिसमृद्धि प्राप्तिकामो गृह निर्माणार्थं कर्त्तव्यशिलास्थापनाङ्गत्वेन वास्तुदेवतामृत्युञ्जयादि प्रसादलाभाय यथासंख्यापरिमितं ब्राह्मणद्वारा जपमहं कारयिष्ये। ततो दक्षिणां वरणसंभारमादाय - ॐ अद्येत्यादि गृहनिर्माणार्थं कर्तव्यशिलास्थापनांगभूत ब्राह्मण द्वारा वास्तोष्पतिमृत्युंजयजपं कारयितुमेभिर्वरद्रव्यैरमुकामुकगोत्रान् अमुकामुकशर्मणः ब्राह्मणान् जापकत्वेन युष्मानहं वृणे। ततो मिष्ठान्नं गुडं वा वितरेत्। ।।इति।।

# ।।अथ गण्डान्त नक्षत्र शान्तिः।।

अथप्रसवमूलनक्षत्रात् द्वितीयमूलनक्षत्रे सुस्नातः शुक्लाम्बरधरो बालकपत्नीसहितो यजमानः भद्रासनोपरि प्राङ्मुख उपविश्य आचम्य प्राणानायस्य आसनशुद्धि विधाय हस्ते अक्षतपुष्पाणि गृहीत्वा ॐ स्वस्ति न इन्द्रो वृद्धश्रवेत्यादि स्वस्त्ययनमन्त्रान् ॐ सुमुखश्चैकदन्तश्चेत्यादि-मङ्गलमन्त्रान् पठेत्। ततः प्रतिज्ञासंकल्पं कुर्यात्। ॐ अद्येत्यादि देशकालौ संकीर्त्य अमुकगोत्रोऽमुककशर्मा (वर्मा-गुप्तो वा) सपत्नीकोऽहं अस्य बालकस्य अस्याः कुमार्याः वा मूलनक्षत्र (ज्येष्ठा, आश्लेषा, मघा, रेवती, अश्विनी वा) तदधिकरणकामुक-पादजननारिष्टनिवारणपूर्वकं तदीयायुर्विवृद्धयुत्तरपित्रादिसम्बन्धिशुभफलप्राप्त्यर्थे श्रीपरमेश्वरप्रीतये च गोमुखप्रसवपूर्वकं अमुकनक्षत्र शान्तिमहं करिष्ये तन्निर्विघ्नतासिद्धयर्थं तदङ्गत्वेन गणपत्यादिपूजनं च करिष्ये। ततः पूजाहोमप्रकरणोक्त-प्रकरणे श्रीगणपति सम्पूज्य नवग्रहादीनां च पूजनं विधाय नान्दीश्राद्धं तदभावे सुवर्णं दद्यात्।
तत्र संकल्पः - ॐ अद्येत्यादि अमुकगोत्रस्यात्मजस्यामुकशर्मणः मूला (ज्येष्ठा, मघा रेवती वा) नक्षत्राधिकरणकजन्माङ्गभूतकर्तव्याभ्युदयिक-श्राद्धजन्यफलसम्प्राप्त्यर्थमिदं यथाशक्ति सुवर्णमग्निदैवतं यथानामगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे।
ततो आचार्यः मण्डपाद्बहिः यजमानस्य गोमयोपलिप्तगृहे ईशानभागेश्वेतसर्षपाणि विकिरेत्। ॐ आपो हि ष्ठेत्यादि मन्त्रेण च विधाय तत्र तण्डुलपिष्टेन अष्टदलपद्म विरच्य तस्योपरि यथाशक्ति ब्रीहीन्निक्षिप्य तस्योपरि नवं वंशशूर्पं निधाय शूर्पे तिलान् दर्भाश्च विकीर्य

तस्योपरि रक्तवस्त्रं प्रसार्य तदुपरि प्राङ्मुखं पश्चिमपादं शिशुं निधाय त्रिगुणितेन माङ्गलिकसूत्रेण तं शिशुं सशूर्पं वेष्टयित्वा शिशुसमीपे गोमुखमानीय संश्लेषं कृत्वा गोमुखात् प्रसवं भावयित्वा कुशगृहीतेन शिशुं मार्जयेत्। तत्र मंत्रः ॐ विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि विशतु। आषिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते।। गवामङ्गेषु इति मन्त्रेण गवां सर्वाङ्गेषु वा स्पृशेत्।
तत्र मन्त्रः ॐ गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश। यस्मात् तस्माच्छिवं मे स्यादिहलोके परत्र च। ततोविष्णो श्रेष्ठेतिमन्त्रेण आचार्यः शिशुमादाय मातृहस्ते दद्यात्।
तत्र मन्त्रः - ॐ विष्णो श्रेष्ठेन रूपेणास्यां नार्यां गवीन्यां पुमांसं पुत्रमाधेहि दशमे मासि सूतवे। अथ माता गोमुखप्रदेशात् शिशुमानीय गोपुच्छदेशे बालं निरीक्षय स्वभर्तृहस्तयोर्दद्यात्। पिता ॐ अङ्गादङ्गात् सम्भवसि हृदयादधिजायसे। आत्मा वै पुत्रनामासि संजीव शरदः शतम्।। इति मन्त्रेण शिशुं मूर्ध्नि त्रिरवघ्राय मात्रे दापयेत्।
तत आचार्यः आपोहिष्ठेतिमंत्रेण शिशुं पञ्चगव्येनाभिषिंचेत्। ततः पिता - गोमुखप्रसवाख्यकर्मणः पुण्याहं भवन्तो ब्रुवन्तु। आचार्यः - ॐ पुण्याहं ॐ पुण्याहं इति ब्रूयात्। ततो गां वा गोनिष्क्रयीभूतं द्रव्यंसंकल्पपूर्वकं आचार्याय दत्त्वा यथाशक्ति नवग्रहप्रीत्यर्थं गो, स्वर्ण, वस्त्र, धान्यादीनि दापयेत्। तत्र संकल्पः ॐ अथ गोमुखप्रसवाख्यकर्मणः सांगता सिद्ध्यर्थं सूर्यादिनवग्रहाणां प्रीत्यर्थं चेमानि गो, वस्त्र सुवर्णधान्यानि सदक्षिणानि तन्निष्कयीभूतानि द्रव्याणि वा यथानामगोत्राय ब्राह्मणाय दातुमहमुत्सृजे। तत ऐशान्यां दिशि धान्योपरि कलशस्थापनविधिना वरुणकलशं संस्थाप्य तत्र चन्दनागुरुकुंकुमसर्वगन्धं श्वेतसर्षपाणि च प्रक्षिपेत्। कलशोपरि सुवर्णनिमितां निर्ऋतिप्रतिमां अधिदेवता इन्द्र प्रत्यधिदेवता अप्सहितां संस्थाप्य अग्न्युत्तारणपूर्वकं ॐ असुन्वन्त यजमानमिच्छस्तेन सेत्वामन्विहितस्करस्य। अन्यमस्मादिच्छ-सातऽइत्यानमो देवि निर्ऋते तुभ्यमस्तु। इति मंत्रेण पूजयेत्। एवं आश्लेषायां सार्पं, मघायां पितृ, ज्येष्ठायां इन्द्र रेवत्यां पूषा, अश्विन्यां अश्विनी प्रतिमां तत्तन्मंत्रेण अधि प्रत्यधिदेवतासहितां स्थापयेत् आवाह्य पूजयेत्।
तत्र आश्लेषामंत्रः ॐ नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु। येऽन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः।। मघामन्त्रः ॐ उशन्तस्त्वा निधीमह्युशन्तः समिधीमहि। उशन्तुशतऽआवह पितृन् हविषेऽअत्तवे।।
ज्येष्ठामन्त्रः - ॐ सयोषाइन्द्र सगणो मरुद्भिः सोम पिब वृत्रहा शूर विद्वान्। जहि शत्रुरपमृधो नृदस्वाथाभय कृणुहि विश्वतो नः।।

रेवतीमन्त्रः – ॐ पूषन्तव व्रते वयं न रिष्येम कदाचन। स्तोत्तारस्त इह स्मसि।। अश्विनीमन्त्रः ॐ यावाङ्कशा मधुमत्यश्विना सूनृतावती। तया यज्ञं मिमिक्षितम्।। अग्न्युत्तारणं प्राणप्रतिष्ठां च पूजाप्रकरणोक्तप्रकारेण कुर्यात्।। तत्परितः पूगीफलेष्वक्षत पुञ्जेषु वा नक्षत्रदेवताः अश्विन्याद्यावाहयेत्। ॐ अश्विभ्यां नमः अश्विनमावाहयामि स्थापयामि।।१।। ॐ यमाय॰ यम॰ २।। ॐ अग्नये॰ अग्नि॰ ३।। ॐ प्रजापतये॰ प्रजापतिं॰ ४।। ॐ सोमाय॰ सोमं॰ ५।। ॐ रुद्राय नमः रुद्रं ६।। ॐ अदितये॰ ७ अदितिं। ॐ बृहस्पतये॰ बृहस्पतिं॰ ८।। ॐ सर्पभ्यो॰ सर्पान् ९।। ॐ पितृभ्यो॰ पितृन् १०।। ॐ भगाय॰ भगं॰ ११।। ॐ अर्यम्णे॰ अर्यमाणम् १२।। ॐ सवित्रे॰ सवितारं॰ १३।। ॐ त्वष्ट्रे॰ त्वष्टारम् १४।। ॐ वायवे ॰ वायु॰ १५।। ॐ इन्द्राग्नीभ्या॰ इन्द्राग्नी॰ १६।। ॐ मित्राय॰ मित्रं॰ १७।। ॐ इन्द्राय॰ इन्द्रं॰ १८।। ॐ निर्ऋतये॰ निर्ऋतिं १९।। ॐ अद्भ्यो॰ अपः २०।। ॐ विश्वेभ्यो देवेभ्यो॰ विश्वान् देवान्॰२१।। ॐ ब्रह्मणे॰ ब्रह्माणम्॰ २२।। ॐ विष्णवे विष्णु २३।। ॐ वसुभ्यो॰ वसून् २४।। ॐ वरुणाय॰ वरुणम्॰ २५।। ॐ अजैकपदे॰ अजैकपादं २६।। ॐ अहिर्बुध्न्याय॰ अहिर्बुध्न्यम् २७।। ॐ पूष्णे॰ पूषाणम् २८।। इत्यावाह्य ॐ मनोजूति॰ इति मन्त्रेण ॐ भूर्भुवः स्वः ॐ निर्ऋत्याद्यावाहितदेवताभ्यो नमः आवाहितदेवता इह सुप्रतिष्ठिता वरदा भवत इति गन्धादिना संपूज्य ॐ अनया पूजया निर्ऋत्यावाहितदेवताः प्रीयन्ताम्। इति जलं क्षिपेत्। ततो वरुणकलशसमीपं तण्डुलगोधूमचूर्णादिनां श्वेतपङ्कजं विरच्य तत्रोपरि सप्तधान्यराशिं कृत्वा तत्र मध्ये शतछिद्रं कलशं निधाय तश्चतुदिक्षु पूर्वादिक्रमेण चतुष्कुंभान् कलशस्थापनविधिना स्थापयेत्। तत्र प्राक्कुंभे रक्तचंदन, कमल, कुष्ट, प्रियंगु, शुंठी, मुस्ता, आमलक, वच, श्वेतसर्षप, मुरामांसी, अगर उशीरादीनि यथालब्धवस्तूनि निक्षिपेत्। ततः ॐ नमस्ते रुद्र मन्यव इत्यादि रुद्राध्यायं पठित्वा कलशस्य स्पर्शं कुर्यात्। पुष्पाणिच क्षिपेत दक्षिणकुंभे पंचामृतं, गजमदं, तीर्थोदकं, सप्तधान्यसुवर्णानि च निक्षिपेत्। ॐ आशुः शिशान इति द्वादश मन्त्रान् पठेत्। पश्चिमकुंभे सप्तमृत्तिका क्षिपेत्। ॐ कृणुष्वाजः पंचमन्त्रान् पठेत् उत्तरकुंभे पंचरत्न, वट, अश्वत्थ, पलाश, प्लक्ष, उदुम्बर, पल्लवान्। जम्बू, प्लक्ष, उदुम्बर, वट, आम्रमूलत्वचः सप्तकूपजलानि च निक्षिपेत्। रक्षोहणं चतुर्मंत्रान् जपेत्। मध्यगते शतछिद्रकुंभे शतौषधयः तदभावे यथालाभं सद्वृक्षाणां पल्लवान्। विष्णुक्रान्ता, सहदेवी, तुलसी, शतावरी, कुश, कुंकुमानि निक्षिपेत्। ॐ त्र्यम्बकमिति अष्टोत्तरशतं जपेत्। जपान्ते कलशम्य स्पर्शं कुर्यात्। साक्षतगन्धपुष्पाणि च क्षिपेत्। तत्र पूर्णपात्रोपरि वरुणमावाह्य पूजनं कुर्यात्। पूजनान्ते अग्निस्थापनप्रदेशात् पश्चिमप्रदेशे केनचिदुपायेन ऊर्ध्वं शिक्यं बद्ध्वा तत्रैव

वंशपात्रे कम्बलखण्डं प्रसार्यं तस्योपरि शतछिद्रं कलशं निधाय तस्याधः सुकाष्ठपीठं निधाय श्वेतवस्त्रेणाच्छाद्य तत्र यजमानं शिशुसहितां पत्नीं चापवेशयेत्। ततः शिक्यस्थे कलशे शनैः चतुः कुंभस्थजल प्रक्षिप्य आचार्यः अभिषेकमन्त्रेण सपत्नीकयजमान-बालकस्योपरि जलधारां कुर्यात्।

तत्र मन्त्रः - ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्।। सरस्वत्यै वाचो यन्तुर्यंत्रिये दधामि बृहस्पतेष्ट्वा साम्राज्ये नाभिषिञ्चाम्यसौ।। ॐ देवस्य त्वा०।। अश्विनो भैषज्येन तेजसे ब्रह्मवर्चसायाभिषिंचामिसरस्वत्यै भैषज्येन वीर्यायान्नाद्यायाभिषिंचामीन्द्रस्येन्द्रियेण बलाय श्रियै यशसेऽभिषिंचामि। ॐ योऽसौ वज्रधरो देवो महेन्द्रो गजवाहनः। मूला (मघा, ज्येष्ठाऽऽश्लेषा) जातस्य शिशोर्दोषं मातापित्रोः व्यपोहतु।।१।। ॐ योऽसौ शक्तिधरो देवो हुतभुङ्मेषवाहनः। सप्तजिह्वश्च देवोऽग्निर्मूला (ज्येष्ठा, मघा, सार्प, गण्ड) दोषं व्यपोहतु।।२।। योऽसौ दण्डधरो देवो धर्मो महिषवाहनः। मूला (ज्येष्ठा, मघा, सार्प, गण्ड) जातशिशोर्दोषं व्यपोहतु यमो मम।।३।। ॐ योऽसौ खड्गधरो देवो निर्ऋतिर्राक्षसाधिपः। प्रशामयतु मूलोत्थं (ज्येष्ठोत्थं मघोत्थं, सार्पोत्थं, गण्डोत्थं) दोषं गण्डान्तसम्भवम्।।४।। ॐ योऽसौ पाशधरो देवो वरुणश्च जलेश्वरः। नक्रवाहः प्रचेता वै मूला (ज्येष्ठा, मघा, सार्प, गण्ड) दोषं व्यपोहतु।।५।। ॐ योऽसौ देवो जगत्प्राणो मारुतो मृगवाहनः। प्रशामयतु मूलोत्थं, (ज्येष्ठोत्थं, मघोत्थं, सार्पोत्थं, गण्डोत्थं) दोषं बालस्य शान्तिदः।।६।। ॐ योऽसौ निधिपतिर्देवः भृङ्गभृद् वाजिवाहनः। मातापित्रोः शिशोश्चैव मूला (ज्येष्ठा, मघा, सार्प, गण्ड) दोषं व्यपोहतु।।७।। ॐ योऽसौपशुपतिर्देवः पिनाकी वृषवाहनः। आश्लेषा (मघा, ज्येष्ठा, मूलागण्ड) संभवान् दोषान्ममाशु व्यपोहतु।।८।। ॐ विघ्नेशः क्षेत्रपो दुर्गा लोकपाला नवग्रहाः। सर्वदोषप्रशमनं सर्वे कुर्वन्तु शान्तिदाः।।९।। ॐ मूलर्क्षे (ज्येष्ठाऽश्लेषा, मघा, गण्ड) जातबालस्य मातृपित्रोर्धनस्य च। भ्रातृज्ञातिकुलस्थानां दोषं सर्वं व्यपोहतु।।१०।। ॐ पितरः सर्वभूतानां रक्षन्तु पितरः सदा। मूला (ज्येष्ठा, मघा, सार्प, गण्ड, नक्षत्रजातस्य वित्तंच ज्ञातिबान्धवान्।।१।। एवं ज्येष्ठा, आश्लेषादि शान्तौ सर्वत्र श्लोकेषु ऊहः कार्य इति विशेषः।

ततो यजमानः सपुत्रसकलत्रः शुद्धोदकेन स्नात्वा वस्त्रान्तराणि परिधाय आर्द्रवासांसि नापिताय दत्त्वा आचामेत्। तत उपविश्य यजमान एवं ॐ शिरोमेश्रीर्यश इति यथालिङ्गं स्वाङ्गानि संस्पृशेत्। तद्यथा ॐ शिरो मे श्रीरस्तु इति शिर आलभेत्। इति सर्वत्र ज्ञेयम्। ॐ यशो मे मुखमस्तु। इति मुखम्। ॐ त्विषर्मे केशाः सन्तु। इति मस्तकस्थान् केशान्। ॐ त्विषिर्मे श्मश्रूणि सन्तु। इति कूर्चमुखजरोमाणि। ॐ राजा मे प्राणा अमृतमस्तु इति नासिकायां प्राणान्। ॐ सम्राण्मे चक्षुरस्तु इति युगपच्चक्षुषी।

ॐ विराट् मे श्रोत्रमस्तु। इतिश्रोत्रम्। ॐ जिह्वा मे भद्रमस्तु। इति जिह्वा । ॐ वाङ्मे महोऽस्तु। इति जिह्वामेव। ॐ मनो मे मन्युरस्तु। इति हृदयम्। (उदकोपस्पर्शः) ॐ स्वराण्मे भामोऽस्तु। इतिभ्रुवोर्मध्यम्। ॐ मोदाः प्रमोदाः मेऽङ्गुल्यः सन्तु। इति हस्ताङ्गुलीः पादाङ्गुलीश्च। ॐ मोदाः प्रमोदाः मेऽङ्गानि सन्तु। इति सर्वाङ्गानि। ॐ मित्रं मे सहोऽस्तु। इति स्वशरीरगतं बलम्। ॐ बाहू मे बलमिन्द्रियंस्तां। इति बाहू। ॐ आत्मा मे क्षत्रमस्तु। इति हृदयम्। (उदकोपस्पर्शनम्) ॐ उरो मे क्षत्रमस्तु। इति हृदयमेव। ॐ पृष्ठं मे राष्ट्रमस्तु। इति पृष्ठवंशम्। ॐ उदरे मे राष्ट्रमस्तु इति उदरम्। ॐ अंसौ मे राष्ट्रस्तां इत्यंसौ। ॐ ग्रीवाश्चमे राष्ट्रं संतु। इति ग्रीवा। ॐ श्रोणी मे राष्ट्रंस्तां। इति कटिद्वयम्। ॐ ऊरू मे राष्ट्रंस्तां। इत्यूरू। ॐ अरत्नी मे राष्ट्रंस्तां इत्यरत्नी। ॐ जानुनी मे राष्ट्रंस्तां इति जानुनी। ॐ विशो मेऽङ्गानि सर्वत्र सन्तु। इति सर्वाङ्गानि। ॐ नाभिर्मे वित्तमस्तु। इति नाभिम्। ॐ नाभिर्मे विज्ञानमस्तु। इति नाभिमेव। ॐ पायुर्मेऽपचितिरस्तु। इतिपायुं। ॐ भसन्मेऽपचितिरस्तु। इति पायुमेव। ॐ आनन्दनन्दावाण्डौ मे स्तां। इत्यण्डौ। ॐ भगो म यशोऽस्तु। इति लिङ्गम् ॐ सौभाग्यं मे यशोऽस्तु। इति लिङ्गमेव। ॐ जङ्घाभ्यां धर्मोऽस्मि। इति जंघे। ॐ पद्भ्यां धर्मोऽस्ति। इति पादौ। ॐ विशि राजा प्रतिसर्वदेहम्।

तत आचार्यः कुशकण्डिकां कृत्वा ॐ प्रजापतये स्वाहेत्यारभ्य ॐ विश्ववर्म्मन हविषा॰ इत्यन्तं होमप्रकरणोक्तप्रकारेण होमं कुर्यात्।

अथ प्रधानहोमः अष्टोत्तरसहस्रमष्टोत्तरशतमष्टाविंशतिमष्टौ वा जुहुयात्।

अथ मूलनक्षत्रहोमः - ओं असुन्वन्त मे यजमानमिच्छ स्तेनस्येत्यामन्विहितस्करस्य। अन्यमस्मदिच्छ सातऽइत्यानमो देवि निर्ऋते तुभ्यमस्तु स्वाहा। ततोऽधिदेवता इन्द्रमन्त्रः ॐ सयोषाऽइन्द्र सगणो मरुद्भिः सोमं पिब वृत्रहा शूर विद्वान्। जहि शत्रूरपमृधो नुदस्वा धा वयंकृणुहि विश्वतो नः स्वाहा।

अथ प्रत्यधिदेवता अप्मंत्रः ॐ आपोहि ष्ठा मयोभुवस्तान ऊर्जे दधातन महे रणाय चक्षसे स्वाहा।

अथ आश्लेषामन्त्रः ॐ नमोऽस्तुसर्पेभ्यो ये के च पृथिवीमनु। ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः स्वाहा।

ततोऽधिदेवतागुरुमन्त्रः - ॐ बृहस्पते अतियदर्यो अर्हाद्युमद्विभाति क्रतुमज्जनेषु। यहीदयच्छवस ऋत प्रजा तदस्मासु द्रविणं धेहि चित्रं स्वाहा।

अथ तत्प्रत्यधिदेवता पितृमन्त्रः - ॐ उशन्तस्त्वा निधीम ह्यु शन्तः समिधीमहि। उशन्नुशत आवह पितृन् हविषे अत्तवे स्वाहा।

## अथ मघानक्षत्र मन्त्र होमः

पितृभ्यः स्वधायिभ्यः स्वधानमः पितामहेभ्यः स्वधायिभ्यः स्वधानमः प्रपितामहेभ्यः स्वधायिभ्यः स्वधानमः अक्षन् पितरो मीमदंत पितरोतीतृपन्तः पितरः पितरः शुन्धध्वं स्वाहा।

तदधिदेवता सर्प मन्त्रः - नमोऽस्तु सर्पेपि॰ स्वा॰

तत्प्रत्यधिदेवतामन्त्रः - ॐ भगं प्रणेतर्भग सत्यराधो भगेमान्धियमुदवाददन्नः। भगं प्र नो जनय गोभिरश्वैर्भग प्रनृभिर्नृवन्तः स्याम स्वाहा।

## अथ ज्येष्ठानक्षत्र मन्त्र होमः

ॐ इन्द्र आसां नेता बृहस्पतिर्दक्षिणायज्ञः पुर एतु सोमः। देवसेनानामभिभञ्जतीनां-ञ्जयन्तीनाम्मरुतो यन्त्वग्रं स्वाहा।

तदधिदेवतामन्त्रः - ॐ मित्रस्य च ऋषणीधृतो वो देवस्य सानसि। द्युम्नं चित्रश्रवस्तमं स्वाहा। तत्प्रत्यधिदेवतामन्त्रः - ॐ असुन्वन्तम॰ स्वाहा।

## अथ रेवतीमन्त्रहोमः

ॐ पूषन्तव व्रते वयन्न रिष्येम कदाचन स्तोतारस्त इह स्मसि स्वाहा।

अधिदेवतामन्त्रः - ॐ शिवो नामासि स्वधितिस्ते पिता नमस्तेऽस्तु मा मा हि ठं॰ सीः। निवर्तयाम्यायुषेन्नाद्याय प्प्रजननाय रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय स्वाहा। ततः प्रत्यधिदेवतामन्त्रः ॐ यावाङ्कशा॰ इत्यादि।

## अथाश्विनीनक्षत्रमन्त्रहोमः

ॐ अश्विना तेजसा चक्षुः प्राणेन सरस्वती वीर्यम्। वाचेन्द्रो बलेनेन्द्राय दधुरिन्द्रियं स्वाहा। तदधिदेवता मन्त्रः - ॐ पूषन्तव व्रते व्वयं न्न रिष्येम कदाचन। स्तोतारस्त इह स्मसि स्वाहा। अथ प्रत्यधिदेवतामन्त्रः - ॐ यमाय त्वाङ्गिरस्वते पितृमते स्वाहा धर्माय स्वाहा धर्मपित्रे स्वाहा। इति प्रधानादिदेवताहोमः।

ततो नक्षत्रदेवताभ्यश्च नाममन्त्रैः प्रत्येकं अष्टसंख्ययास्त्रुवेणाज्याहुतीर्हुत्वा स्विष्टकृद्धोमं कुर्यात्। ततो भूरादि प्राजापत्यान्ता नवाहुतीर्जुहुयात्। ततो दिक्पालपुरःसरं बलिदानादिकं सर्वं विधाय प्रधानकुंभस्थं जलमानीय ब्राह्मणाः पत्नीबालकसहितयजमानस्योपरि पूजाप्रकरणोक्तप्रकारेणाभिषिंचेयुः। ततो विधिपूर्वकं मंगलस्नानोत्तरं दक्षिणादानादिसंकल्पं कुर्यात्। ततः कांस्यपात्रस्थघृते बालस्य मुखावलोकनं कार्यं नूतनवस्त्राच्छादितं मातुरंकस्थं कृत्वा शंखध्वनिपूर्वकं पिता बालस्य घृतपुरितछायापात्रे मुखमीक्षयित्वा स्वयं पत्नीं च

सम्यक् मुखमवलोक्य संकल्पपूर्वकं विप्राय दद्यात्। तत आवाहितदेवतानामुत्तरपूजादिकं सूर्यार्घ्यदानान्तं कृत्वा सप्तविंशतिर्दश वा ब्राह्मणान् भोजयेत्।
आश्लेषादिगण्डान्तयोः प्रसवेऽपि इदमेवानुष्ठेयम्। तत्र प्रयोगवरुणाभिषेकादौ मूलापदस्थाने तत्तत् पदमूहनीयम्।।

इति मूलादिगण्डान्तशान्तिः।।

# अथ वैधृति शान्ति प्रयोगः

**संकल्प : -** देशकालौ संक्कीर्त्य॰ - नामगोत्रोच्चार्यः -अस्य शिशोः वैधृति जनन सूचितं सर्वारिष्टं दोषादि विनाशार्थम् दुःख दौर्भाग्यनिवृतिपूर्वकं उत्तरोतर भाग्योदयार्थम् श्री प्रमेश्वर प्रीत्यर्थम् वैधृति योग शान्ति करिष्ये। इति संकल्प्य।
तदङ्गत्वेन - आदौ गणपत्यादि देवानां यथा लब्धोपचारै अर्चयिष्ये।
प्रधान देवता - रुद्र, अधिदेवता - सूर्य, प्रत्यधिदेवता - चन्द्रमा, अष्टदलोपरि त्रिन् कलशं संस्थाप्य। स्वर्णमूतिं अग्न्युतारणंकृत्वा स्थापयेत्।
१. आवाहनम् - ॐ त्र्यम्बकं य्याजामहे - (मध्य) ध्यानम् ॐ नमस्ते रुद्र॰ -
ॐ भूर्भुवः स्वः रुद्र इहागच्छ इहतिष्ठ वरदो भव।
२. आवाहनम् - ॐ आकृष्णेन॰ (दक्षिणे) ध्यानम् - ॐ चित्रं देवाना॰ -
ॐ भूर्भुवः स्वः सूर्य इहागच्छ इह तिष्ठ वरदो भव।
३. आवाहनम् - ॐ इमन्देवा॰ - (वामे) ध्यानम् - ॐ चन्द्रमामनसो॰ -
ॐ भूर्भुवः स्वः चन्द्र इहागच्छ इह तिष्ठ वरदो भव।
"प्रतिष्ठापनम् कृत्वा" रुद्राद्यावाहित देवताभ्योनमः।। षोडशोपचारैः संपूजयेत्। रुद्रसूक्तं, अप्रतिरथ सूक्तं पुरुष सूक्तं, महामृत्युञ्जय मन्त्रांश्च विप्रा जपेयुः। अग्नि स्थापनम् ग्रहस्थापनं कृत्वा। समिधा, आज्य, पायस, बिल्व फलादि से हवन करे। प्रधान देवता १००० वा १०८ सूर्य सोमयो १०८, २८ आहूति देवे। (यथाशक्तया हवनं)
(अन्य विधान हवन प्रकरण अनुसार करे।)

।।इति वैधृति योग शान्तिः।।

# ।।अथ व्यतीपात योग शान्तिः।।

**अथ संकल्पः -** देशकालौ संक्कीर्त्य - नाम गोत्रोच्चार्य - अस्य शिशोः व्यतीपात जनन सूचित सर्वारिष्ट शान्ति द्वारा आयुरारोग्य प्राप्त्यर्थम् व्यतीपात जनन शान्ति करिष्ये।

**।।गणपत्यादि देवानां पूजयिष्ये।।**

वैधृति शान्ति अनुसारेण अष्ट दलं च कृत्वा कलशं संस्थाप्य।

प्रधान देवता - सूर्य (मध्य), अधिदेवता - अग्नि (दक्षिणे), प्रत्यधिदेवता - रुद्र (वामे)।

१. ॐ आकृष्णेन॰ - सूर्याय नमः सूर्यमावाहयामि स्था॰

२. ॐ अग्निदूतं - अग्नये नमः अग्निमावाहयामि स्था॰

३. ॐ नमः शम्भवाय॰ - रुद्राय नमः रुद्रमा॰ -

यथालब्धोपचारै संपूज्य कलशं स्पर्शः -

१. विभ्राड॰ - २. अग्निसूक्तं - ३. त्र्यम्बकं मंत्र जपेयुः।

वा रुद्राष्टाध्यायी का पाठ करे।

(शेष वैधृत शान्तिवत् ) कर्म करे।

(संक्रांति शान्ति कर्म भी व्यतिपात वत् करे केवल संकल्प में भेद करे।)

# ।।अथ त्रिखल शान्ति प्रयोगः।।

तीन पुत्र के बाद कन्या का जन्म हो या तीन कन्या जन्म के बाद पुत्र का जन्म होने पर त्रिखल शान्ति करावे।

सूतकान्ते शुभेऽह्नि यजमानः सपत्नीकःससुतः शुद्धासने प्राङ्मुख उपविश्याचम्य प्राणानायम्य आसनशुद्धिं विधाय स्वस्त्ययनं वाचयित्वा सकल्पं कुर्यात्। तद्यथा - ॐ अद्येत्यादि देशकालौ संकीर्त्य - अमुकगोत्राऽमुकशर्मा श्रुत्याद्युक्तफलावाप्तिकामोऽवगतानवगतसकलदुरितध्वंसपूर्वकत्रिखलसुतजन्म (कन्या जन्मत्रयानन्तरं) अथवा (सुतत्रयजन्मानन्तरकन्याजननं) सूतिकैतत्कुमारै रेतत्सम्बन्धि पित्राद्यरिष्टोपशमनपूर्वक-श्रीमद्ब्रह्मादिदेवप्रसाद हेतुकैतद्बालकपित्रादिसकलजनाधिकरणकातिशयानन्दावाप्त्यर्थ श्री ब्रह्मादिपूजनरूपां त्रिखलशान्तिमहं करिष्ये। तदङ्गत्वेन निर्विघ्नतासिद्ध्यर्थं श्रीमद्गणपत्यादिपूजनं च करिष्ये। ततः पूजाप्रकरणोक्तविधिना श्रीगणपतिनवग्रहादीनां च पूजनं कृत्वा नांदीश्राद्धं तदभावे सुवर्णं वा दद्यात्। तत्र संकल्पः ॐ अद्ये॰ अमुक गोत्रस्यात्मजस्यामुकशर्मणः त्रिखलजन्मशान्त्यङ्ग भूतकर्तव्याभ्युदयिकश्राद्धजन्यफल-सम्प्राप्त्यर्थंममुंयथाशक्ति सुवर्णमग्निदैवतं यथानाम॰। तत ऐशान्यां दिशि धान्योपरि कलशस्थापनविधिना वरुणं कलशं संस्थाप्य तत्र चन्दनागुरुकुंकुमादि गंधपुष्पाणि च प्रक्षिपेत्। ततो वरुणकलशसमीपे गोधूमचूर्णेन कमलाकारं विरच्य तदुपरि कुंकुमाचिततण्डुल-राशिं कृत्वा तत्र मध्ये व्रणछिद्ररहितं श्रीरुद्रकलशं पूर्वदिशि श्रीब्रह्मकलशं, दक्षिणदिशि विष्णुकलशं, पश्चिमदिशि इन्द्रकलशं उत्तरदिशि-ईशकलशम् निधाय कलशस्थापनाविधिना स्थापयेत्।

ततः पूर्वदिशि कलशोपरि ताम्रपात्रस्थस्वर्णमयमूर्तौ श्रीब्रह्माणं पूजयेत्। तत्र संकल्पः – ॐ अद्येत्यादि पूर्वप्रतिज्ञातार्थसिद्ध्यर्थं क्रियमाणत्रिखलान्त्यङ्गत्वेन पूर्वस्यां दिशि रक्तवस्त्रद्वयावेष्टितकलशोपरि ताम्रपात्रस्थस्वर्णमयमूर्तौ ब्रह्मपूजनमहं करिष्ये। अक्षतानादाय ध्यानम्। ॐ पद्मपत्रासनस्थश्च ब्रह्मकायश्चतुर्मुखः। अक्षमालाश्रुवं बिभ्रत् पुस्तकं च कमण्डलुम्।। आवाहनम् – पद्मयोने चतुर्मूर्ते वेदव्यास पितामह। आयाहि ब्रह्मलोकात्त्वं तस्मै ब्रह्मात्मने नमः। ततः ब्रह्मयज्ञानमिति मन्त्रेण पाद्यादिभिः सम्पूज्य प्रार्थयेत् – ॐ कृष्णाजिनाम्बरधर पद्मासन चतुर्मुख। जटाधर जगद्धातः प्रसीद कमलोद्भव।। ततो वरणसंभृतमादाय ॐ अद्येत्यादि पूर्वप्रतिज्ञातार्थसिद्ध्यर्थं क्रियमाणत्रीतरशान्त्यङ्गत्वेन शुभफलप्राप्त्यर्थं ब्रह्मयज्ञानमितिमन्त्रस्य ब्राह्मणद्वारा युग्मसहस्रजप कारयितुमेभिर्वरण-द्रव्येरमुकगोत्रममुकशर्माणं ब्राह्मण त्वामहं वृणे। वृतोऽस्मीति प्रतिवचनम्। ततो दक्षिणदिशि कलशोपरि श्रीविष्णुपूजनम्। तत्र संकल्पः – ॐ अद्येत्यादि क्रियमाणत्रीतरशान्त्यङ्गत्वेन दक्षिणदिशि पीतवस्त्रावेष्टितैतत्कलशोपरि ताम्रपात्रस्थस्वर्णमयमूर्तौ विष्णुपूजनमहं करिष्ये। अक्षतानादाय ध्यानम् – ॐ सशंखचक्रं सकिरीटकुण्डलं सपीतवस्त्रं सरसीरुहेक्षणम्। सहारवक्षस्थलकौस्तुभश्रियं नमामि विष्णुं शिरसा चतुर्भुजम्।। आवाहनम् – ॐ एह्येहि नीलाम्बुजपादपद्म श्रीवत्सवक्षः कमलाविधेय। सर्वामरैः पूजितपादपद्म गृहाण पूजां भगवन्नमस्ते। ततः ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्यपा ठ॰ सुरे।। इति मन्त्रेण पाद्यादिभिः सम्पूज्य प्रार्थयेत् – ॐ योऽसावनन्तरूपेण ब्रह्माण्डं सचराचरम्। पुष्पवद्धरते नित्यं तस्मैनित्यं नमो नमः।। ततो वरणसंभृतमादाय – ॐ अद्येत्यादि कृतैतत् त्रीतर शान्त्यङ्गत्वेन ॐ विष्णोरराटमसि इत्यनेन मन्त्रेण ब्राह्मण द्वारा युग्मसहस्र जपं कारयितुमेभिर्वरणद्रव्यैरमुकगोत्रममुकशर्माणं ब्राह्मणं जापकत्वेन त्वामहं वृणे। वृतोऽस्मीति प्रतिवचनम्। ततः पश्चिमदिशि कलशोपरि इन्द्रं पूजयेत्। तत्र संकल्पः – अद्येत्यादि क्रियमाणत्रीतरशान्त्यंगत्वेन पश्चिमदिशि चित्रविचित्रवस्त्रावेष्टितै तत्कलशोपरि ताम्रपात्रस्थ-स्वर्णमयमूर्तौ श्रीइन्द्रपूजनमहं करिष्ये। अक्षतानादाय ध्यानम् – चतुर्दन्तो गजारूढ़ो वज्रपाणिः पुरन्दरः। शचीपतिस्तु ध्यातव्यो नानारत्नविभूषितः। आवाहनम् – एह्येहि सर्वामरसिद्धसाध्यैर-भिष्टुतो वज्रधरामरेश। संवीज्यमानोऽप्सरसां गणेन रक्षाध्वरन्नो भगवन्नमस्ते। ततः ॐ त्रातारमिन्द्रमवितारमिन्द्र ठ॰ हवे हवे सुहव ठ॰ शूरमिन्द्रं ह्वयामि शक्रं पुरुहूत मिन्द्रं ठ॰ स्वस्तिनो मघवा धात्विन्द्रः।। इति सम्पूज्य प्रार्थयेत् – ॐ भगवन्तो गजारूढ़ा वज्रहस्ताः सुराधिपाः। पूर्वावकाशा युष्माभिः रक्षणीया प्रयत्नतः।। ततो वरणसंभृतमादाय ॐ अद्येत्यादि पूर्वप्रतिज्ञातार्थसिद्धौ क्रियमाणत्रीतरशान्त्यंगत्वेन ॐ त्रातारमिन्द्रमितिमन्त्रस्य ब्राह्मणद्वारा युग्मसहस्त्रं जपं कारयितुमेभिर्वरणद्रव्यैरमुकगोत्रममुकशर्माणं ब्राह्मणं जापकत्वेन त्वामहं

वृणे। वृतोऽस्मीतिप्रतिवचनम् तत उत्तरदिशि ईशं कलशोपरि पूजयेत्। तत्र संकल्पः- ॐ अद्येत्यादि॰ पूर्वप्रतिज्ञातार्थसिद्ध्यर्थं क्रियमाणत्रीतरशान्त्यंगत्वेन उत्तरदिशि शुभ्रवस्त्रावेष्टितैतत्कलशोपरि ताम्रपात्रस्थस्वर्णमयमूर्तौ ईशपूजनमहं करिष्ये। अक्षतानादाय ध्यानम् - शुद्धस्फटिकसंकाशं गौरीशं वृषवाहनम्। वरदाभयशूलाक्षसूत्रधृक्परमेश्वरम्।। आवाहनम् - ॐ एह्येहि विश्वेश्वर नस्त्रिशूलनिस्त्रिंशखट्वांगधरेणसार्धम्। लोकेश यज्ञेश्वर यज्ञसिद्ध्यै गृहाण पूजां भगवन्नमस्ते। ॐ तमीशानं जगतस्तस्थुषस्पतिं धियं जिन्वमवसे हूमहे वयं। पूषा नो यथावेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये।। इत्यनेन सम्पूज्य पुनः प्रार्थयेत्। रक्षां मे कुरु देवेश त्रिनेत्राय त्रिशूलिने। वृषध्वजाय यज्ञाय नक्षत्रपतये नमः। ततो वरणसम्भृतमादाय ॐ अद्येत्यादि॰ क्रियमाणत्रीतर-शान्त्यङ्गत्वेन ॐ तमीशानमिति-मन्त्रस्य ब्राह्मणद्वारा युग्मसहस्रजपं कारयितुमेभिर्वरण-द्रव्यैरमुकगोत्रममुकशर्माणं ब्राह्मण जापकत्वेन त्वामहं वृणे ॐ वृतोऽस्मीतिप्रतिवचनम्। ततो मध्यकलशोपरि रुद्रं पूजयेत्। तत्र संकल्पः ॐ अद्येत्यादि॰ क्रियमाणत्रीतर-शान्त्यङ्गत्वेन मध्यकलशोपरि ताम्रपात्र-स्थस्वर्णमयमूर्त्तौ श्रीरुद्रपूजनमहं करिष्ये। अक्षतानादाय ध्यानम् - ॐ दक्षोत्सङ्गनिषण्ण-कुञ्जरमुखं प्रेम्णा करेण स्पृशन् वामोरुस्थितवल्लभांकनिलयं स्कन्दं परेणामृशन्। इष्टाभीतिमनोहरं करयुगं बिभ्रत्प्रसन्नाननो भूयान्नः शरदिन्दुसुन्दरतनुः श्रेयस्करः शङ्करः।। तत आवाहनम् - एह्येहि शम्भो करशूलपाणे गंगाधर श्रीधन नीलकण्ठे, उमापते भस्म-विभूषितांग महेश्वर त्वं भगवन्नमस्ते ॐ नमस्ते रुद्र मन्यव उतोत इषवे नमः। बाहुभ्यामुतते नमः। इति मंत्रेण संपूज्य प्रार्थयेत। ॐ शिवाकान्त शंभो शशाङ्कार्धमौले महेशान शूलिन् जटाजूटधारिन्। त्वमेको जगद्व्यापको विश्वरूप प्रसीद प्रसीद प्रभो पूर्णरूप।। ततो वरणसंभृतमादाय ॐ अद्येत्यादि॰ पूर्वप्रतिज्ञातार्थसिद्ध्यर्थं क्रियमाणत्रीतरशान्त्यङ्गत्वेन ॐ नमस्ते रुद्रमन्यव इति मंत्रस्य ब्राह्मण द्वारा युग्मसहस्रजप कारयितुमेभिर्वरण-द्रव्यैरमुकशर्माणं ब्राह्मणं त्वामहं वृणे। ॐ वृतोऽस्मीति प्रतिवचनम्। तत आचार्यः कुशकण्डिकां कृत्वा ॐ प्रजापतये स्वाहेत्यारभ्य ॐ विश्वकर्मन् हविषा॰ इत्यन्तं होमप्रकरणोक्तविधिना होमं कुर्यात्। ततो ब्रह्माणं, विष्णुं, इन्द्रेशं रुद्रञ्च प्रत्येकं चरुतिलैः अष्टोत्तरशतसंख्याहुतिं तथा जपदशांशेन च होमं कृत्वा स्विष्टकृद्धोमं कुर्यात्। ततो भूरादिप्राजापत्यान्तान्नवाहुतीर्जुहुयात् ततो दिक्पालपुरःसरं बलिदानादिकं सर्व विधाय कलशानां जलमादाय विप्राः भद्रासने उपविष्टं यजमानं ससुतं सपत्नीकं पूजाप्रकरणोक्तप्रकारेण कुशत्रयेणाभिषिंचेयुः। तत्राभिषेकान्ते प्रार्थना ॐ विघ्नेशः क्षेत्रपो दुर्गा पिनाकी वृषवाहनः। त्रिखलजातशिशोर्दोष व्यपोहतु यमस्तथा।। ॐ योऽसौ शक्तिधरो देवो हुतभुङ्मेषवाहनः। सप्तजिह्वः स देवोऽग्निस्त्रिखलदोषं व्यपोहतु। अभिषेकनिवृत्तौ यजमानस्तीर्थोदकेन

स्नात्वा मृद्भाण्डं पादेन स्फोटयेत्। वस्त्रान्तराणि परिधाय आर्द्रवासांसि नापिताय दत्त्वाचामेत्। ततः शान्तिपाठपूर्वकमधोद्वारेण बालकनिष्कासनं, स्वर्णनिर्मिताभावे यज्ञीयकाष्ठनिर्मितगजपृष्ठोपरि बालकस्य स्नानं च कारयित्वा छत्रं शिरसि धारयेत्। तत्र मंत्रः ॐ आतपत्र पवित्राणां नृपाणां कीर्तिवर्धन। पाहि मां सुदृढ़च्छत्र सागरा-मृतसंभव।। ततः शिशु त्रिवारं चुम्बयेत्। अन्नादिदानं कुर्यात्। घृतपूरितकांस्यपात्रेण छायापात्रदानं।

अथान्नत्रयदानम् - ॐ अद्यकृतै तत् त्रीतरशान्त्यङ्गत्वेन श्रीब्रह्मविष्णुइन्द्रेशरुद्रप्रीयते इदं कुडवादिपरिमितं गोधूमाद्यन्नत्रयं विश्वेदेवदेवताकं यथानाम०।

अथ वस्त्रत्रयदानम्। ॐ अद्यकृतैतत् त्रीतरशान्त्यङ्गत्वेन श्रीब्रह्मविष्णु इन्द्रेशरुद्रप्रीतये वस्त्रत्रयं बृहस्पतिदैवताकं यथानाम गोत्राय०।

अथ धातुत्रयदानम् - ॐ अद्य कृतैतत् त्रीतरशान्त्यङ्गत्वेन श्रीब्रह्मविष्णु इन्द्रेशरुद्रप्रीतये इदं यथाशक्ति स्वर्णरजतताम्रं अग्निरुद्रविष्णुदैवताकं यथानाम० ।

अथ तिलपात्रदानम् - अद्य कृतैतत् त्रीतरशान्त्यङ्गत्वेन श्री ब्रह्मविष्णु इन्द्रेशरुद्रप्रतीये इदं तिलपात्रं विष्णुदैवत्यं यथानाम्ने गोत्राय०।।

ततः आवाहितदेवतानामुत्तरपूजाश्रीसूर्यार्घ्यदानान्तं कर्म कृत्वा प्रमादादिति पठेत्।।

।। इति त्रिखलशान्तिः।।

# ।।अथ दर्श ( अमावस्या ) शान्ति विधिः।।

**संकल्पः -** अत्राद्य... अस्य शिशोः दर्श (अमावस्या) जनन सूचितं सकल अरिष्टं निरसनं द्वारा श्री परमेश्वर प्रीत्यर्थं दर्शजनन शांतिं करिष्ये। ऋत्विक्वरणान्तं कर्म पूर्ववत्। मंडले कलशं संस्थाप्य तस्मिन् पंचगव्यं, वट अश्वत्थ उदुम्बर प्लक्ष आम्रवृक्षाणां मूलत्वक्पल्लवान्, पंच रत्नानि निक्षिप्य वरुणं संपूज्य **वारुणमंत्रैः अभिमंत्रयेत्।**

**मध्ये पितृस्थापनम् -** ॐ आ यन्तु नः पितरः सोम्यासो ऽ ग्निष्वात्ताः पथिभिर्देवयानैः। अस्मिन् यज्ञे स्वधया मदन्तोऽधि ब्रुवन्तु तेऽवन्त्वस्मान्।। सुखाय पितृन् कुलवृद्धिकर्तृन् रक्तोत्पलाभान् इह रक्तनेत्रान्। सुरक्तमाल्यांबर भूषितांश्च नमामि पीठे कुलवृद्धि हेतोः।। ॐ भूर्भुवः स्वः पितरः इहागच्छत इह तिष्ठत वरदा भवत।

**दक्षिणे चन्द्रस्थापनम् -** ॐ इमन्देवा० दधिशंख० ॐ भूर्भुवः स्वः चन्द्र इहागच्छ इह तिष्ठ वरदो भव।

**वामे सूर्यस्थापनम् -** ॐ सविता पश्चात्तात् सवितापुरस्तात् सवितोत्तरात्तात् सविताधरात्तात्। सवितान÷सुवतु सर्वतातिं सविता नो रासतां दीर्घमायु÷।। यन्मंडलं दीप्तिकरं विशालं, रत्नप्रभं तीव्रमनादिरूपम्। दारिद्य दु:खक्षयकारणं च, पुनातु मां तत्सवितुर्वरेण्यम्।। ॐ भूर्भुवः स्वः सूर्य इहागच्छ इह तिष्ठ वरदो भव। लब्धोपचारैः पूजयेत्। ॐ सविता त्वा॰ क्रमानुसारं अग्निं संस्थाप्य प्रार्थयेत् - आयुः आरोग्यसिद्ध्यर्थं सर्वारिष्ट प्रशांतये। पुत्रस्य दर्शजनन दोषनिर्हरणाय च।। मातापित्रोः कुमारस्य सर्वारिष्ट प्रशांतये। तेषामायुः श्रिये चैव शांतिहोमं करोम्यहम्।। अन्वाधानमनुसृत्य पूजामंत्रैः होमः। पितृभ्य॰ १०८, सोमाय॰ २८, सूर्याय॰ २८ समित् चरु आज्येन जुहुयात्। अभिषेकार्थं श्रीसूक्तं आयुष्यमंत्रान् च जपेत्। उत्तरतंत्रम्। कर्म ईश्वरार्पणम्।

# सिनीवाली कुहूशांतिः

(सिनीवाली अर्थात् चतुर्दशी युक्त अमावास्या। प्रतिपदा युक्त अमावास्या कुहू। दोनों में कालभेद से नामभेद है, विधि समान है।)

**संकल्प -** मासपक्षादि उल्लिख्य... अस्य शिशोः सिनीवाल्यां/कुव्हां वा उत्पत्या सूचितस्य अनिष्टस्य निरासार्थं शांति करिष्ये। ऋत्विक् वरणान्तं कर्म समाप्य पीठे धान्यराशिं कृत्वा रुद्रं इन्द्रं पितृन् स्थापयेत्।

**रुद्रस्थापनम् -** ॐ त्र्यम्बकं यजामहे॰, ह्रीं मृत्युंजय महादेव॰ ॐ भूर्भुवः स्वः भो रुद्र इहागच्छ इह तिष्ठ वरदो भव।।

**इन्द्रस्थापनम् -** ॐ त्रातारमिन्द्र॰, इन्द्रश्चतुर्भुजो वज्रांकुशचापः ससायकः। रक्तवर्णो गजारूढो सर्वारिष्ट विनाशकः।। ॐ भूर्भुवः स्वः भो इन्द्र इहागच्छ इह तिष्ठ वरदो भव।।

**पितृस्थापनम् -** ॐ पितृभ्य ÷ स्वधायिभ्य ÷ स्वधानम ÷ पितामहेभ्य ÷ स्वधायिभ्य स्वधा नमः ÷ प्रपितामहेभ्य ÷ स्वधायिभ्य ÷ स्वधा नम ÷ अक्षन् पितरोऽमीमदन्त पितरो ऽ तीतृपन्त पितरः पितरः शुन्धध्वम्।। पितरः कृष्णवर्णाश्च चतुर्हस्ता विमानगाः। गदाक्षसूत्रकमंडलु - अभयस्यैव धारिणः।। ॐ भूर्भुवः स्वः पितरः इहागच्छत इह तिष्ठत वरदा भवत।। लाभोपचारैः पूजयेत्। अन्य पीठे चतुर्दिक्षु मध्ये च एवं पंचकलशान् संस्थाप्य तेषु पंचगव्यादिकं निक्षिप्य वारुणमंत्रैः आवाह्य संपूज्य भद्रसूक्तं, वरुणसूक्तं पुरुषसूक्तं रुद्रसूक्तं त्र्यम्बकमंत्रान् च आग्नेयादि क्रमेण जपेयुः। अग्निस्थापनं ग्रहहोमः। स्थापितदेवता होमः रुद्रइन्द्रपितृभ्यः १००८, १०८ समित् चरु तिल आज्य आहुतिभिः जुहुयात्। त्र्यम्बकमंत्रेण तिलहोमः। शेषं कर्म शांतिसाधारणम्।

# अथ हवन प्रकरण

(यज्ञकुण्ड का निर्माण शास्त्रविधि के अनुसार करे।)

**कुण्ड का स्वरूप –** प्राच्यांशिरः समाख्यातं बाहू कोणे व्यवस्थितौ। ईशानाग्नेयकोणे तु जङ्घे वायव्यनैऋते।। उदरं कुण्ड मित्युक्तं योनिर्योनि र्विधियते।

(विधि हीन निर्माण होने से अनेकानेक हानि संताप होता है।)

कुण्डाभावे बालुकाभिः समेखलं स्थण्डिलं होमानुसारेण एक-हस्तात्मकं द्विहस्तात्मकं वा कुर्यात् (२४ अङ्गुलात्मको हस्तः)।

**कुंडस्थदेवतापूजन प्रयोगः** आचम्य प्राणानायम्य। संकल्पः अद्येत्यादि... शुभपुण्यतिथौ मया प्रारब्धस्य कर्मणः सांगतासद्धियर्थं अस्मिन् कुंडे कुंडस्थदेवतानां आवाहनं पूजनं तथा च पंचभूसंस्कारपूर्वकं अग्निप्रतिष्ठां करिष्ये। कुशैः कुंडसंमार्जनम् कुशोदकेन प्रोक्षणम्- ॐ आपो हि॰ कुंडं स्पृष्टवा आवाहयेत् – आवाहयामि तत् कुंडं विश्वकर्मविनिर्मितम्। शरीरं यच्च ते दिव्यं अग्न्यधिष्ठानं अद्भुतम्।। ॐ भूर्भुवः स्वः कुंडाय नमः कुंडं आवाहयामि स्थाप॰। ततः प्रार्थयेत् – ये च कुंडे स्थिता देवाः कुंडांगे याश्च देवताः। ऋद्धिं यच्छन्तु ते सर्वे यज्ञसिद्धिं ददन्तु नः।। कुंडमध्ये देवान् आवाहयेत् (अक्षतान् आदाय)

ॐ विश्वकर्मन् हविषा वर्धनेन त्रातारमिन्द्रमकृणोरवध्यम्। तस्मै विशः समनमन्त पूर्वीरयमग्रो विहव्यो यथाऽसत्। उपयामगृहीतोऽसीन्द्राय त्वा विश्वकर्मण एष ते योनिरिन्द्राय त्वा विश्वकर्मणे।।

कुण्डमध्ये – ॐ भूर्भुवः स्वः विश्वकर्मणे नमः विश्वकर्माणम् आवा॰ स्थाप॰।। भो विश्वकर्मन् इहागच्छ इह तिष्ठ।। ततः प्रार्थयेत्।। ब्रह्म वक्त्रं भुजौ क्षत्रमूरू वैश्यः प्रकीर्तितः पादौ यस्य तु शूद्रो हि विश्वकर्मात्मने नमः। अज्ञानाज्ज्ञानतो वापि दोषाः स्युः खननोद्भवाः।। नाशय त्वखिलांस्ताँस्तु विश्वकर्मन्नमोऽस्तु ते।। ततो मेखलायोनिकण्ठनाभिवास्तु-देवतानाम् आवाहनं कुर्यात्।। उपरि मेखलायां श्वेतवर्णालंकृतायां – ॐ इदं विष्णु॰, विष्णो यज्ञपते देव दुष्टदैत्यनिषूदन। विभो यज्ञस्य रक्षार्थं कुंडे संनिहितो भव।। ॐ भूर्भुवः स्वः विष्णवे नमः विष्णुं आ॰ स्था॰। भो विष्णो इहागच्छ इह तिष्ठ। मध्यमेखलायां रक्तवर्णालंकृतायां ॐ ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचौ वेन आवः। स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च वि वः।।

हंसपृष्ठसमारूढ आदिदेव जगत्पते। रक्षार्थं मम यज्ञस्य मेखलायां स्थिरो भव।। ॐ भू॰ ब्रह्मणे नमः॰ भो ब्रह्मन् इ॰।। अधो मेखलायां कृष्णवर्णालंकृतायां – ॐ नमस्ते रुद्र॰, गंगाधर महादेव वृषारूढ महेश्वर। आगच्छ मम यज्ञेऽस्मिन् रक्षार्थं रक्षसां गणात्।। ॐ भू॰ रुद्राय॰ भो रुद्र इ॰।।

योन्यावाहनम् ॐ क्षत्रस्य योनिरसि क्षत्रस्य नाभिरसि। मा त्वा हि ठं॰ सीन्मा मा हि ठं॰ सी।। आगच्छ देवि कल्याणि जगदुत्पत्तिहेतुके।। मनोभवयुते रम्ये योनि त्वं सुस्थिरा भव।। जगदुत्पत्तिकायै मनोभवयुतायै योन्यै नमः योनिमावा॰ स्थाप॰।। भो जगदुत्पत्तिके मनोभवयुते योनि इहागच्छ इह तिष्ठ।। ततः प्रार्थयेत्।। सेवन्ते महतीं योनिं देवर्षिसिद्धमानवाः।। चतुरशीतिलक्षाणि पन्नाद्याः सरीसृपाः।। पशवः पक्षिणः सर्वे संसरन्ति यतो भुवि।। योनिरित्येव विख्याता जगदुत्पत्तिहेतुका।। मनोभवयुता देवी रतिसौख्यप्रदायिनी।। मोहयित्री सुराणाञ्च जगद्धात्रि नमोऽस्तु ते।। योने त्वं विश्वरूपाऽसि प्रकृतिर्विश्वधारिणी।। कामस्था कामरूपा च विश्वयोन्यै नमो नमः।।४ कण्ठदेवतावाहनम्

ॐ नीलग्रीवाः शितिकण्ठाः शर्वा अधः क्षमाचराः तेषा ठं॰ सहस्रयोजनेऽव धन्वानि तन्मसि।।

कुंडस्य कंठदेशोऽयं नीलजीमूतसन्निभः। अस्मिन् आवाहये रुद्रं शितिकंठं कपालिनम्।। ॐ भूर्भुवः स्वः कंठे रुद्राय॰।। प्रार्थयेत् – कंठमंगलरूपेण सर्वकुंडे प्रतिष्ठितः। परितो मेखलास्त्वत्तो रचिता विश्वकर्मणा।। नाभ्यावाहनम् ॐ नाभिर्मे चित्तं विज्ञानं पायुर्मेऽपचितिर्भसत्। आनन्दनन्दावाण्डौ मे भगः सौभाग्यं पसः। जङ्घाभ्यां पद्भ्यां धर्मोऽस्मि विशि राजा प्रतिष्ठितः।।

पद्माकाराऽथवा कुण्डसदृशाकृतिबिभ्रती। आधारः सर्वकुण्डानां नाभिमावाहयामि ताम्। ॐ भूर्भुवः स्वः नाभ्यै नमः नाभिम् आवा॰ स्थाप॰।। भो नाभे इहागच्छ इह तिष्ठ।। ततः प्रार्थयेत्।। नाभे त्वं कुण्डमध्ये तु सर्वदेवैः प्रतिष्ठिता। अतस्त्वां पूजयामीह शुभदा सिद्धिदा भव।। ततः कुण्डमध्ये नैर्ऋत्यकोणे वास्तुपुरुषमावाहयेत्।। ॐ वास्तोष्पते प्रतिजानीह्यास्मान्स्वावेशोऽअनमीवो भवानः। यत्त्वे महे प्रतितन्नो जुषस्व शन्नो भव द्विपदे शं चतुष्पदे।। (पा॰ गृ॰)।। आवाहयामि देवेशं वास्तुदेवं महाबलम्। देवदेवं गणाध्यक्षं पातालतलवासिनम्।।ॐ भूर्भुवः स्वः नैर्ऋत्यकोणे वास्तुपुरुषाय नमः वास्तुपुरुषम् आवा॰ स्थाप॰।। भो वास्तुपुरुष इहागच्छ इह तिष्ठ।। ततः प्रार्थयेत्। यस्य देहे स्थिता क्षोणी ब्रह्माण्डं विश्वमङ्गलम्। व्यापिनं भीमरूपञ्च सुरूपं विश्वरूपिणम्।। पितामहसुतं मुख्यं वन्दे वास्तोष्पतिं प्रभुम्।। वास्तुपुरुष देवेश सर्वविघ्नहरो भव। शान्तिं कुरु सुखं देहि सर्वान्कामान्प्रयच्छ मे।। एवं कुण्डस्थितान् सर्वान्देवानावाह्यैकतन्त्रेण प्रतिष्ठां कृत्वा पूजयेत्। हस्तेऽक्षतानादाय। ॐ मनोजूतिर्जु॰। ॐ भूर्भुवः स्वः विश्वकर्मादिवास्तुपुरुषान्ताः सर्वे कुण्डस्थदेवाः सुप्रतिष्ठिता वरदा भवेयुः।। ततो गन्धाक्षतपुष्पाण्यादाय।। ॐ भूर्भुवः स्वः विश्वकर्मादिवास्तुपुरुषान्तेभ्यः कुण्डस्थदेवेभ्यो नमः सर्वोपचारार्थे गन्धाक्षतपुष्पाणि सम॰।। इति सम्पूज्य। एकस्मिन्पात्रे

बलिदानार्थं दध्योदनं कुण्डाद्बहिः संस्थाप्य बलिदानं कुर्यात्। हस्ते जलं गृहीत्वा। ॐ भूर्भुवः स्वः विश्वकर्मादिवास्तुपुरुषान्तेभ्यः कुण्डस्थदेवेभ्यो नमः यथाशक्ति अमुं दध्योदनबलिं सम०।। पुनर्जलं गृहीत्वा। अनेन यथाशक्ति विश्वकर्मादिवास्तु-पुरुषान्तानां कुण्डस्थदेवानां पूजनेन बलिदानेन च विश्वकर्मादिवास्तुपुरुषान्ताः सर्वे कुण्डस्थदेवाः प्रीयंतां न मम।

भूमिकूर्मानन्तपूजनम् - ॐ भूरसि० -, ॐ भूर्भुवः स्वः भूम्यै नमः०

ॐ यस्य कुर्मो गृहे हविस्तमग्ने वर्धया त्वम्। तस्मै देवा अधि ब्रुवन्नयं च ब्रह्मणस्पतिः।।

ॐ भूर्भुवः स्वः कूर्माय नमः० ॐ स्योना पृथिवि० ॐ भूर्भुवः स्वः अनंताय०

ॐ भूर्भुवः स्वः भूमिकूर्मानन्तदेवताभ्यो नमः सर्वोपचारार्थे० गन्धाक्षत पुष्पाणि स०,

**।।इति कुण्ड पूजनम्।।**

## ।।अथ पञ्चभूसंस्कारपूर्वकाग्निप्रतिष्ठापन प्रयोगः।।

**आचार्य :** कश्चिद्विप्रो वा यजमानानुज्ञया हस्ते जलं गृहीत्वा। अस्मिन्कुण्डे (यजमानानुज्ञया) पञ्चभूसंस्कारपूर्वकम् अग्निप्रतिष्ठां करिष्ये। इति संकल्प्य दक्षिणहस्ते दर्भपुञ्जं गृहित्वोत्थाय दक्षिणत आरभ्योदक्संस्थं पश्चिमतः प्रागन्तं त्रिवारं परिसमूहनं कुर्यात्। तद्यथा। दर्भैः परिसमूह्य परिसमूह्य परिसमूह्य। एवं परिसमूहनं विधाय कुण्डाद्बहिः पूर्वस्यामीशान्यां वा दर्भत्यागं कुर्यात्। ततो दक्षिणहस्तेन गोमयमादाय पूर्ववत् दक्षिणत आरभ्योदक्संस्थं पश्चिमतः प्रागन्तं गोमयेनोपलिपेत्।। तद्यथा। गोमयेन उपलिप्य उपलिप्य उपलिप्य। एवं त्रिवारम् उपलेपनं कृत्वा हस्तं प्रक्षाल्य दक्षिणहस्तेन स्रुवमादाय पूर्ववद्दक्षिणत आरभ्योदक्संस्थं पश्चिमतः प्रागन्तं स्रुवमूलेन त्रिरुल्लेखनं कुर्यात्।। तद्यथा। स्रुवमूलेन उल्लिख्य उल्लिख्य उल्लिख्य। एवं त्रिवारमुल्लेखनं कृत्वाऽनामिकाङ्गुष्ठेन पूर्ववत् कुण्डतः पांसूनामुद्धरणं विद्धयात्। तद्यथा। अनामिकाङ्गुष्ठेन उद्धृत्य उद्धृत्य उद्धृत्य। एवं त्रिवारं पांसूनामुद्धरणं कृत्वा तान् प्राच्यांक्षिप्त्वा पूर्ववत् न्युब्जपाणिना जलेन त्रिवारम् अभ्युक्षणं कुर्यात्।। तद्यथा। उदकेन अभ्युक्ष्य अभ्युक्ष्य अभ्युक्ष्य। ततोऽग्निं स्थापयेत्। बहुपशोर्वैश्यस्य गृहात् श्रोत्रियागारात् सूर्यकान्तसम्भूतात् स्वकीयगृहाद्वा सुवासिन्या स्त्रिया आनीतं निर्धूमम् अन्यताम्रादिपात्रेणाच्छादितम् अग्निं कुण्डस्य आग्नेय्यां दिशि निधाय आच्छादितं पात्रम् उद्घाट्य ''हुं फट्'' इति क्रव्यादांशम् अग्निं नैर्ऋत्यां दिशि परित्यज्य अग्निं कुण्डस्य उपरि त्रिवारं भ्रामयित्वा। ॐ अग्निं दूतं पुरो दधे हव्यवाहमुप ब्रुवे। देवाँ२ आसादयादिह।। मन्त्रं पठन् कुण्डे स्वात्माभिमुखं शतमङ्लनामानम् अग्निं स्थापयेत्।। ततोऽग्यानीतपात्रे साक्षतोदकं निषिच्य तत्र शिष्टाचारात्किञ्चिद्यथाशक्ति हिरण्यं रौप्यद्रव्यं वा निक्षिप्य तत्

द्रव्यं यजमानपत्न्यै दद्यात्। ततोऽग्नौ आवाहनादिमुद्राः प्रदर्शयेत्।। भो अग्ने त्वम् आवाहितो भव। भो अग्ने त्वं संस्थापितो भव। भो अग्ने त्वं सन्निहितो भव। भो अग्ने त्वं संन्निरुद्धो भव। भो अग्ने त्वं सकलीकृतो भव।। भो अग्ने त्वम् अवगुण्ठितो भव। भो अग्ने त्वम् अमृतीकृतो भव। भो अग्ने त्वं परमीकृतो भव।। इति ताः ताः मुद्राः प्रदर्श्य। अग्निम् इन्धनप्रक्षेपेण प्रज्वलितं कृत्वा करसम्पुटौ विधाय अग्निध्यानं कुर्यात्

ॐ चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य। त्रिधा बद्धो वृषभो रौरवीति महो देवो मर्त्यां२ आ विवेश।।

रुद्रतेजः समुद्भूतं द्विमूर्धानं द्विनासिकम्। षण्णेत्रं च चतुःश्रोत्रं त्रिपादं सप्तहस्तकम्।।१।।
याम्यमागे चतुर्हस्तं सव्यभागे त्रिहस्तकम्। स्रुवं स्रुचञ्च शक्तिञ्च ह्याक्षमालाञ्च दक्षिणे।।२।।
तोमरं व्यजनं चैव घृतपात्रञ्च वामके। बिभ्रतं सप्तभिर्हस्तैर्द्विमुखं सप्तजिह्वकम्।।३।।
याम्यायने चतुर्जिह्वं त्रिजिह्वं चोत्तरे मुखम्। द्वादशकोटिमूर्त्याख्यं द्विपञ्चाशत्कलायुतम्।।४।।
आत्माभिमुखमासीनं ध्यायेच्चैवं हुताशम्।। गोत्रमग्नेस्तु शाण्डिल्यं शाण्डिल्यासितदेवलाः।।५।।
त्रयोऽमी प्रवरा माता त्वरणी वरुणः पिता। रक्तमाल्याम्बरधरं रक्तपद्मासनस्थितम्।।६।।
स्वाहास्वधावषट्कारैरङ्कितं मेषवाहनम्। शतमङ्गलनामानं वह्निमावाहयाम्यहम्।।७।।
त्वं मुखं सर्वदेवानां सप्तार्चिरमितद्युते। आगच्छ भगवन्नग्ने कुण्डेऽस्मिन्सन्निधो भव।।८।।

भो वैश्वानर शाण्डिल्यगोत्र शाण्डिल्यासितदेवलेतित्रिप्रवरान्वित भूमिमातः वरुणपितः ललाटजिह्व मेषध्वज प्राङ्मुख मम सम्मुखो भव।। इति ध्यात्वा हस्तेऽक्षतान् गृहीत्वाऽवाहयेत्। तद्यथा। ॐ मनोजूतिर्जु०।।९।। अमुक नामाग्ने यथा –

ॐ शतमङ्गलनामाग्ने सुप्रतिष्ठितो वरदो भव।। ततो गन्धाक्षतपुष्पाण्यादाय पूजनं कुर्यात्।
ॐ भूर्भुवः स्वः शतमङ्गलनाम्ने वैश्वानराय-नमः सर्वोपचारार्थे गन्धाक्षतपुष्पाणि सम०।
इति कुण्डस्य वायव्ये कोणे अग्निं सम्पूज्य प्रार्थयेत्।। अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम्। हिरण्यवर्णममलं समिद्धं विश्वतोमुखम्।। इति अग्निप्रतिष्ठापनम्।।

(अग्नि के अनेक नाम हैं अतः अनुष्ठान के अनुसारेण नाम उच्चारण करे।)

"अग्निपूजनं कृत्वा" नवग्रहादि स्थापनम् एवं असंख्यातारुद्र पूजनम् (कलशे)।

**ब्रह्मावरण –** वरणद्रव्यमादाय – कर्तव्यामुक होम कर्मणि कृताकृत वेक्षण रूप ब्रह्म कर्म कर्तुममुक शर्म्माणं ब्राह्मणमेभि पुष्पचन्दनताम्बूल वासोभिर्ब्रह्मत्वेन त्वामहं वृणे (वा पञ्चाशत् कुशनिर्मितं प्रदक्षिण ग्रन्थिकं ब्रह्मा।)

इतिमङ्गलसूत्रं बद्धवा ब्रह्माणं वृणुयात् वृतोऽस्मीतिप्रति वचनं। यथाविहितं कर्म कुर्विति आचार्येणोक्ते करवाणीति प्रतिवचनम्। ब्रह्मासनम् दक्षिणे प्रमाणं – दक्षिणे दानवाः प्रोक्ताः पिशाचोगरराक्षसाः। तेभ्य संरक्षणार्थाय ब्रह्मास्थाप्यस्तु दक्षिणे।।य० (मीमांसा)

# कुशकण्डिका:

अग्नेर्दक्षिणतो ब्रह्मासनम्। अग्नेरुत्तरतः प्रणीतासनद्वयम्। ब्रह्मासने ब्रह्मोपवेशनम्। 'यावत्कर्म समाप्यते तावत् त्वं ब्रह्मा भव' इति यजमानः। 'भवामि' इति ब्रह्मा वदेत्। ततो ब्रह्मणाऽनुज्ञातः प्रणीताप्रणयनम्। तद्यथा – प्रणीतापात्रं पुरतः कृत्वा, वारिणा परिपूर्य, कुशैराच्छाद्य, प्रथमासने निधाय, ब्रह्मणो मुखमवलोक्य द्वितीयासने निदध्यात्। ईशानादि-पूर्वाग्रैः कुशैः परिस्तरणम्। तद्यथा – ततो बर्हिषश्चतुर्थभागमादाय। आग्नेयादीशानान्तम् उदगग्रैर्वा। ब्रह्मणोऽग्निपर्यन्तं प्रागग्रैः, नैर्ऋत्या-द्वायव्यान्तम, उदगग्रैर्वा। अग्नितः प्रणीतापर्यन्तं प्रागग्रैः, इतरथावृत्तिः।

**कुशकण्डिका –** (कुशकण्डिका की विधि इस प्रकार से है। अग्नि के दक्षिण भाग में ब्रह्मा के लिए एक छोटी चौकी आसनरूप में रखे। अग्नि के उत्तर की ओर प्रणीता के लिए ३ कुश रखे। अग्नि की प्रदक्षिणा कराकर ब्रह्मा के लिए रक्खी हुई चौकी पर यजमान 'यावत्कर्म समाप्यते' यह बात कहकर ब्रह्मा को बैठावे। 'भवामि' इस वाक्य को कहकर पहले से स्थापित आसन पर ब्रह्मा को स्थापित करे। इसके उपरान्त ब्रह्मा की आज्ञा से प्रणीतापात्र को जल से भरे। उसकी विधि इस प्रकार से है – प्रणीतापात्र को अपने सामने रखे, उसमें जल भरकर कुशाओं से ढँक दे और पहले आसन पर रखकर ब्रह्मा के मुख को देखकर दूसरे आसन पर उस प्रणीता कोरख दे। तदुपरान्त आग्नेयकोण से ईशानादि पर्यन्त परिस्तरण करे, उसका क्रम यह है – बर्हिकुश के चौथे भाग को अपने बायें हाथ में लेकर अग्रभाग वाली कुशाओं से दाहिने हाथ से उत्तर की ओर, आग्नेयकोण से ईशानकोण तक, पूर्व दिशा की ओर, अग्रभाग वाली कुशाओं से ब्रह्मा के आसन से अग्निकुण्ड तक, उसी प्रकार उत्तर दिशा की ओर, अग्रभाग वाली कुशाओं से नैर्ऋत्यकोण से लेकर वायव्यकोण तक एवं पूर्व की ओर अग्रभाग वाली कुशाओं से अग्निकुण्ड से प्रणीतापात्र तक कुशा बिछावें। इसके पश्चात् हाथ में जल लेकर उलटा घुमावें।

**पात्रासादनम् –** ततः पात्रासादनं कुर्यात्। तद्यथा – त्रीणि पवित्रे द्वे। प्रोक्षणीपात्रम्। आज्यस्थाली। चरुस्थाली। सम्मार्जनकुशाः पञ्च। उपयमनकुशाः सप्त। समिधस्तिस्रः। स्रुवः। आज्यम्। तण्डुलाः। पूर्णपात्रम्। वृष (धेनु) निष्क्रयदक्षिणा। उपकल्पनीयानि द्रव्याणि निधाय।

**पवित्रछेदनक्रमः –** ततो द्वयोरुपरि त्रीणि निधाय। द्वौ मूलेन प्रदक्षिणीकृत्य, सर्वान् युगपदनामिकाऽङ्गुष्ठाभ्यां धृत्वा। त्रिभिश्छिद्य। द्वौ ग्राह्यौ, त्रिस्त्याज्यः, प्रोक्षणीपात्रे प्रणीतोदकमासिच्य, त्रिः पूर्णं, पवित्राभ्यामुत्पवनम्। प्रोक्षण्याः सव्यहस्तकरणम्।

दक्षिणेनोद्दिङ्गनम्। प्रणीतोदकेन प्रोक्षणीप्रोक्षणम्। प्रोक्षण्युदकेन आज्यस्थाल्याः प्रोक्षणम्। चरुस्थाल्याः प्रोक्षणम्। सम्मार्जनकुशानां प्रोक्षणम्। उपयमनकुशानां प्रोक्षणम्। समिधां प्रोक्षणम्। स्रुवस्य प्रोक्षणम्। आज्यस्य प्रोक्षणम्। तण्डुलानां प्रोक्षणम्। पूर्णपात्रस्य प्रोक्षणम्। उपकल्पनीयानां पदार्थानां प्रोक्षणम्। असञ्चरे प्रोक्षणीर्निधाय।

**पात्रासादन –** (तदुपरान्त पात्रासादन करें, जिसका क्रम इस प्रकार से है – एक जगह तीन कुशा व दूसरी जगह दो कुशा, प्रोक्षणीपात्र, घृतपात्र, चरुस्थाली, सम्मार्जनकुशा पाँच, उपयमन कुशा सात, तीन समिधा, स्रुवा, घृत, चावल, पूर्णपात्र, (धेनु) वृषमूल्य, दक्षिणा और भी जो स्थापन करने योग्य पदार्थों को (वहाँ) रक्खें।)

**पवित्रछेदनमक्रम –** पवित्र छेदन का क्रम इस प्रकार से है – पूर्व स्थापित दो कुशाओं पर तीन कुशाएँ रखे, तथा दो कुश के मूलभाग में प्रदक्षिण कर सभी को दो बार अनामिका अंगुली और अंगूठे से पकड़कर तीन कुशाओं को तोड़ दें। पुनः अपने दायें हाथ में उन कुशाओं को लेकर प्रणीता के जल को तीन बार प्रोक्षणीपात्र में छोड़ें। तदुपरान्त अनामिका और अंगूठे से पवित्री को पकड़कर तीन बार प्रोक्षणी के जल को प्रादेशमात्र उछालें। तत्पश्चात् प्रोक्षणीपात्र को बायें हाथ में लेकर दाहिने हाथ से उस प्रोक्षणी के जल को ऊँचा उछालें। प्रणीतापात्र के जल से प्रोक्षणी का प्रोक्षण करें। तदुपरान्त प्रोक्षणी के जल से आज्यस्थाली का सिंचन करें। इसी प्रकार चरुस्थाली, सम्मार्जन कुशा, उपयमन कुशा, समिधा, स्रुवा, घृत, अक्षत, पूर्णपात्र तथा वहाँ रखे हुए सभी पदार्थों का प्रोक्षणी-जल से प्रोक्षण करें। इसके पश्चात् अग्नि व प्रणीतापात्र के बीच में उस प्रोक्षणीपात्र को रख दें।

आज्यस्थाल्यामाज्यनिर्वापः। चरुस्थाल्यां प्रणीतोदकासेकपूर्वकं तण्डुलप्रक्षेपः। ब्रह्मणो दक्षिणत आज्याधिश्रयणम्। चरोरधिश्रयणं स्वयमाज्यस्योत्तरतः। ज्वलदुल्मुकेनोभयोः पर्यग्निकरणम्। इतरथावृत्तिः। उदकोपस्पर्शः। अर्धश्रिते चरौ अधोमुखस्य स्रुवस्य प्रतपनम्। सम्मार्जनकुशैः स्रुवस्योर्ध्वमुखस्य सम्मार्जनम्। अग्रैरन्तरतोमूलैर्बाह्यतः स्रुवं सम्मृज्य। प्रणीतोदकेनाभ्युक्षणम्। सम्मार्जनकुशानामग्नौ प्रक्षेपः। पुनः प्रतपनं, दक्षिणदेशे निधानम्। आज्योद्वासनम्। चरुं पूर्वेणानीयाऽग्नेरुत्तरतः स्थापयेत्। चरोरुद्वासनम्। अग्नेरुत्तरत एवाज्यस्य प्रदक्षिणीकृत्य आज्यास्योत्तरतश्चरुं स्थापयेत्। आज्योत्पवनम्। आज्यावेक्षणम्। अपद्रव्यनिरसनम्। पुनः प्रोक्षण्युत्पवनम्। वामहस्ते उपयमनकुशानादाय। उत्तिष्ठन् समिधोभ्यादाय, घृताक्ताः समिधस्तिस्रः अग्नौ क्षिपेत्। प्रोक्षण्युदकेन सपवित्रहस्तेन ईशानादि अग्नेः प्रदक्षिणं पर्युक्षणम्। इतरथावृत्तिः।

तदुपरान्त घृतपात्र में घृत भरें, अग्नि के पश्चिम में पवित्र सहित चरुपात्र में प्रणीता जल से आसेचन करके अक्षतों को छोड़ें। ब्रह्मा के दाहिनी ओर उस घृतपात्र को रख दें। घृतपात्र के उत्तर से चरुपात्र को अग्नि पर चढ़ावें। जलती हुई लकड़ी को लेकर उस घृत के कटोरे के चारो ओर सीधा घुमा दें, पुनः उसी प्रकार उसको उलटा घुमावें। अब जल का स्पर्श करें और चरु के आधे पक जाने पर स्रुवे को हाथ में लेकर उसके छेद को नीचे की ओर करके अग्नि में तापित कर सम्मार्जन कुशा के अग्रभाग से स्रुवे के ऊर्ध्वमुख का सम्मार्जन व अन्तर तथा मूल स्रुवा के बाह्य भाग का सम्मार्जन करके प्रणीता के जल से स्रुवे का अभ्युक्षण करें तथा सम्मार्जन कुशाओं को अग्नि में त्याग दें। पुनः श्रुव को अग्नि में तपाकर उसको अपने दायें भाग में रक्खें। घृतपात्र को अग्नि पर से उतार कर चरु को पूर्व दिशा से लाकर अग्नि के उत्तर की ओर स्थापित कर दें। अब चरु को अग्नि पर से उतारकर अग्नि से उत्तर की ओर से ही घृतपात्र की प्रदक्षिणा कर घृत के उत्तर ओर चरु को रख दें। पुनः कुशा से घृत को कुछ उछालें। पश्चात् घृत का अवलोकन भलीभाँति कर लें तथा उसमें पड़े हुए अपद्रव्य को निकाल दें। पुनः प्रोक्षणी-जल छिड़क दें। उपयमन संज्ञक सात कुशाओं को बायें हाथ में लेखर खड़े होवें और दाहिने हाथ में घृत लगी हुई तीन समिधाओं को लेकर प्रजापति (ब्रह्मा) का मन में ध्यान कर अग्नि में छोड़ दें। इसके पश्चात् पवित्र धारण किये हुए हाथ से प्रोक्षणी जल द्वारा ईशानकोण से ईशानकोण तक अग्नि का प्रदक्षिण क्रम से पर्युक्षण करें। पुनः अप्रदक्षिण क्रम द्वारा ईशानकोण पर्यन्त अपने दाहिने हाथ को घुमा दें। इसी कर्म को इतरथावृत्ति कहते हैं।
ततः पवित्रे प्रणीतासु निधाय दक्षिणं जान्वाच्य ब्रह्मणा कुशैरन्वारब्ध उपयमनकुशसहितं प्रसारिताङ्गलि हस्तं हृदि निधाय दक्षिणहस्तेन मूले चतुरङ्गुल त्यक्त्वा शङ्खसनिभमुद्रया स्रुवं गृहीत्वा समिद्धतमेऽग्नौ वायव्य कोणादारभ्याग्निकोणपर्यन्तं प्राञ्चं वा सन्तघृतधारया मनसा प्रजापतिं ध्यायन् स्रुवेण तुष्णीं सशेषं मौनी जुहुयात्। नात्र स्वाहाकारः। इदं प्रजापतये न मम इति यजमानेन त्यागः कर्तव्यः। होमत्यागानन्तरं स्रुवावशिष्टस्याज्यस्य सर्वत्र प्रोक्षणीपात्रे प्रक्षेपः कार्यः।
तद्नन्तर उन पवित्र को प्रणीता पात्र में रख कर अपने दाहिने जानु को मोड़कर ब्रह्मा से कुशों द्वारा अन्वारब्ध (स्पर्श) कर उपयमन कुशा के सहित अपने हाथ की अँगुलियों को फैलाकर उस हाथ को हृदय में लगा दाहिने हाथ से स्रुव के मूल से चार अंगुल छोड़कर शंखमुद्रा से स्रुव को ग्रहण कर प्रदीप्त अग्नि में वायव्य-कोण से प्रारम्भ कर अग्निकोण पर्यन्त या पूर्व दिशा की तरफ निरन्तर घी की धारा द्वारा प्रजापति का मन से ध्यान कर स्रुव से चुपचाप शेष के सहित हवन करे, इसमें स्वाहाकार नहीं है। 'इदं प्रजापतये न मम'

इस वाक्य का यजमान त्याग करे। होम त्याग के बाद स्त्रुव स्थित आज्य का सर्वत प्रोक्षणी पात्र में प्रक्षेप करे।
यजमान संकल्प करे - देशकालौ सङ्कीर्त्य - स्वयं वा ब्राह्मण द्वारा कृतस्य (कारित) अमुक देवता जपपाठ कर्मण: संपूर्णतासिद्ध्यर्थं दशांशेन तिलादिमिश्रपायस द्रव्येन वा (विशेष अमुक द्रव्येण) होममहं करिष्ये इति संकल्पयेत।। (समाचारात् पुण्याहवाचनम्) (वा साक्षतपुष्पजलं गृहीत्वा सङ्कल्पः-देशकालौ संकीर्त्य अस्मिन् अमुक-देवता-मन्त्र-जपकृतपुरश्चरण-दशांश-हवनाख्ये कर्मणि इदं सम्पादितं समिच्चरुतिलाज्यादि-हविर्द्रव्यं विहितसंख्याहुतिपर्याप्तं या या: वक्ष्यमाणदेवतास्तस्यै तस्यै देवतायै न मम। यथासंख्यं यथादैवतमस्तु इति वदन् साक्षतजलं भूमौ क्षिपेत्।)
**तत्रादौ**, घृताहुतिः अग्नेरुत्तरभागे - ओं प्रजापतये स्वाहा इति मनसा इदं प्रजापतये न मम इत्युच्चैः प्रोक्षण्यां त्यागः। अग्नेर्दक्षिणभागे - अग्नये स्वाहा, इदमग्नये न मम। ओं सोमाय स्वाहा, इदं सोमाय न मम इत्याज्यभागौ। ॐ भूः स्वाहा, इदमग्नये न मम। ओं भुवः स्वाहा, इदं वायवे न मम। ओं स्वः स्वाहा, इदं सूर्याय न मम, एता महाव्याहृतयः। तत आचार्यः - ओं यथा बाणप्रहाराणां कवचं वारकं भवेत्। तद्वद्दैवोपघातानां शान्तिर्भवति वारिका।। शान्तिरस्तु पुष्टिरस्तु यत्पापं रोगम्, अकल्याणं तद्दूरे प्रतिहतमस्तु, द्विपदे चतुष्पदे सुशान्तिर्भवतु, इति पठित्वा यजमानमूर्द्धाभिषेकः।

# अथ सर्वप्रायश्चित्त संज्ञक पञ्चवारुणहोमः

ॐ त्वन्नो अग्ने वरुणस्य विद्वान् देवस्य हेडो अवयासि सीष्ठाः। यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषा ठं॰ सि प्रमुमुग्ध्यस्मत्स्वाहा। इदमग्नी वरुणाभ्यां न मम।।१।। ॐ स त्वन्नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ। अवयक्ष्व नो वरुण ठं॰ रराणो वीहि मृडीक ठं॰ सुहवो न एधि स्वाहा। इदमग्नीवरुणाभ्यां न मम।।२।। ॐ अयाश्चाग्नेऽस्य नभिशस्तिपाश्च सत्यमित्वमया असि। अयानो यज्ञं वहास्ययानो धेहि भेषज ठं॰ स्वाहा। इदमग्नये अयसे न मम।।३।। ॐ ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः। तेभिर्नो अद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा। इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च न मम।।४।। ॐ उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमंठं॰ श्रथाय। अथा वयमादित्य व्रते तवानागसो अदितये स्याम स्वाहा। इदं वरुणाय न मम।।५।। अत्रोदकस्पर्शः इति पञ्च वारुणी (प्रायश्चित्तसंज्ञक) होमः। ततश्चन्दनपुष्पाक्षतैर्वायव्यकोणे बहिरग्निं सम्पूज्य ग्रहहोमपुरः सरं प्रधानहोमं कुर्यात्। (आहुति के समय नमः नहीं उच्चारण करे।)

अथ गणपति - [१]नवग्रह-अधिदेवता-प्रत्यधिदेवता-पञ्चलोकपालानां होमः-तत्रादौ दशाहुतिरेकां वाहुतिं श्रीगणपतये - (अन्वारब्धं विना) ॐ गणानान्त्वा गणपति ठ॰ हवामहे प्रियाणान्त्वा प्रियपति ठ॰ हवामहे निधीनान्त्वा निधिपति ठ॰ हवामहे वसो मम। आहमजानि गर्भधमात्वमजासि गर्भधम् स्वाहा। इदं गणपतये न मम। ततः गायत्री ॐ कारादिमण्डलदेवतानां पूजनोक्तक्रमेण यथाशक्ति आहुतीर्जुहुयात्।

आवाहित मण्डल देवता के नाम मन्त्र वा वेदमन्त्रो से हवन करे। पीठ देवता, यन्त्र, आवरण देवता को भी आहूति देवे।

प्रधान देवता को मूलमन्त्र या पाठादि से विशेष द्रव्य के द्वारा आहुति प्रदान करे। (अनुष्ठान के अनुसारेण)।

**विशेष -** गायत्री हवन में व्याहृतिरहिता

**गुग्गुलहोमः -** मम गृहे भूतादिदोषनिवृत्ति अर्थं गुग्गुलहोमं करिष्ये। ॐ त्र्यंबकं यजामहे॰ - स्वाहा।

**सर्षपहोमः -** मम सर्वारिष्ट शांति अर्थं शत्रुबलक्षयार्थं सर्षपहोमं करिष्ये। ॐ सजोषा इन्द्र स गणो मरुद्भिः सोमं पिब वृत्रहा शूर विद्वान। जहि शत्रूँ १ रप मृधौ नुदस्वाथाभयं कृणुहि विश्वतौ नः।। सर्वा बाधा प्रशमनं त्रैलोक्यस्याखिलेश्वरी। एवमेव त्वया कार्यं अस्मद् वैरिविनाशनम्।। स्वाहा।। उदकस्पर्शः।।

कमलगट्टा, पायस, कमलपुष्प, बिल्बपत्र से लक्ष्मी प्राप्ति हेतु होम करे।

मम गृहे स्थिर लक्ष्मी दशविध प्राप्त्यर्थ महालक्ष्मी प्रसन्नार्थम् अमुक द्रव्येण हवनं करिष्ये। श्री सूक्त वा लक्ष्मी बीजमन्त्र से आहुति प्रदान करे।

**उत्तर पूजनम् -** कर्मणः सांगता सिद्ध्यर्थं स्थापितदेवतानां मृडाग्नेः च उत्तरपूजनं करिष्ये। आवाहित स्थापित गणपत्यादि मण्डल देवताओं की पञ्चोपचार से पूजा करे।

**अग्नि पूजनम् -** ॐ स्वाहा स्वधा युताग्नये वैश्वानराय नमः इति पञ्चोपचारैः संपूज्य।

**प्रार्थना करे -** ॐ अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान्। युयोध्यस्मत् ज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम।। अग्नि प्रज्वलितं॰ -

ॐ अनया पूजया स्वाहा स्वधा युतोग्मि प्रीयंताम् इति जल मुत्सृजेत्।

"ततो हुतशेष हविर्द्रव्यं गृहीत्वा ब्रह्मणान्वारब्धः-"

ॐ अग्नये स्विष्टकृते स्वाहा इदमग्नये न मम।"

---

१. नवग्रह समिधा - सूर्य-अर्क, चन्द्र-पलाश, भौम-खदीर, बुध-अपामार्ग
गुरु - पिप्पल, शुक्र-उदम्बर, शनि-शमी, राहु-दूर्वा, केतु-कुशा

हवन कर्म में नानाविध दोष परिहार हेतु नवाहुतय प्रदान करे। आज्य के द्वारा –
ॐ भूः स्वाहा इदमग्नये न मम/१/ ॐ भुवः स्वाहा इदं वायवे न मम/२/ ॐ स्वः स्वाहा इदं सूर्याय न मम/३/
ॐ त्वं नो अग्ने वरुणस्य विद्वान् देवस्य हेडो अव यासिसीष्ठाः। यजिष्ठो वह्नितम् शोशुचानो विश्वा द्वेषा ठं॰ सि प्र मुमुग्ध्यस्मत् स्वाहा इदमग्नी वरुणाभ्यां न मम।४। ॐ स त्वं नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ। अव यक्ष्व नो वरुण ठं॰ रराणो वीहि मृडीक ठं॰ सुहवो न एधि स्वाहा इदमग्नीवरुणाभ्यां न मम।५। ॐ अयाश्चाग्नेस्यनभिशस्तिपाश्च सत्यमित्वमया ऽ असि। अयानो यज्ञं वहास्ययानो धेहि भेषज स्वाहा इदमग्नये अयसे न मम।६। ॐ ये ते शतं वरुण ये सहस्त्रं यज्ञियाः पाशावितता महान्तः। तेभिर्नो अद्य सवितोत विष्णुर्विश्वे मुंचन्तु मरुतः स्वर्काः स्वाहा इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भयः स्वर्केभ्यश्च न मम।७। ॐ उदुत्तमं वरुण पाशमस्मदवा धमं विमध्यम ठं॰ श्रथाय। अथा वयमादित्यव्रते तवानागसो ऽ अदितये स्याम स्वाहा इदं वरुणायादित्यायादितये च न मम।८। ॐ प्रजापतये स्वाहा इदं प्रजापतये न मम।९।
नवाहुतिनां प्रोक्षणी पात्रे संस्त्रवप्रक्षेपः। आवाहित देवताओं के लिए बलिदान करे।।

## बलिदानम्

मया प्रारब्धस्य... कर्मणः सांगतासिद्धयर्थं दिक्पालदेवतानां स्थापितदेवतानां च पूजनपूर्वकबलिदानं करिष्ये।
यथा प्राच्यां इन्द्राय नमः इन्द्रं सांगं सपरिवारं सायुधं सशक्तिकं एभिः गंधाद्युपचारैः त्वां अहं पूजयामि। इन्द्राय सांगाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपं आसादितबलिं सम॰ भो इन्द्र दिशं रक्ष बलिं भक्ष मम सकुटुंबस्य अभ्युदयं कुरु। मम गृहे आयुः कर्ता क्षेमकर्ता शांतिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता कल्याणकर्ता वरदो भव। अनेन पूजनपूर्वकबलिदानेन इन्द्रः प्रीयताम्। (एवं सर्वत्र) अथवा एकतंत्रेण – ॐ प्राच्यै दिशे स्वाहा ऽर्वाच्यै दिशे स्वाहा दक्षिणायै दिशे स्वाहा ऽर्वाच्यै दिशे स्वाहा प्रतीच्यै दिशे स्वाहा ऽर्वाच्यै दिशे स्वाहोदीच्यै दिशे स्वाहा ऽर्वाच्यै दिशे स्वाहो र्ध्वायै दिशे स्वाहा ऽर्वाच्यै दिशे स्वाहा ऽवाच्यै दिशे स्वाहा ऽर्वाच्यै दिशे स्वाहा।।
इन्द्रादिभ्यो दशभ्यो दिक्पालेभ्यो नमः। इन्द्रादिदशदिक्पालेभ्यः साङ्गेभ्यः सपरिवारेभ्यः सायुधेभ्यः सशक्तिकेभ्यः इमान् सदीपदधिमाषभक्तबलीन् समर्पयामि। भो भो

इन्द्रादिदशदिक्पालाः। स्वां स्वां दिशं रक्षत बलिं भक्षत मम सकुटुम्बस्य सपरिवारस्य आयुःकर्तारः क्षेमकर्तारः शान्तिकर्तारः पुष्टिकर्तारः तुष्टिकर्तारः वरदा भवत। अनेन बलिदानेन इन्द्रादिदशदिक्पालाः प्रीयन्ताम्।

**गणपतिबलि** : ॐ गणानान्त्वा॰ ॐ भुर्भूवः स्वः गणपतिं सांगं सपरिवारं सायुधं सशक्तिकम् एभिर्गंधाद्युपचारैः त्वामहं पूजयामि। गणपतये सांगाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपं आसादित बलिं सम॰। भो गणपते इमं बलिं गृहाण मम सकुटुंबस्य सपरिवारस्य अभ्युदयं कुरु। मम गृहे आयुःकर्ता क्षेमकर्ता शांतिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता कल्याणकर्ता वरदो भव। अनेन पूजनपूर्वकबलिदानेन गणपतिः प्रीयंतां।

**मातृकाबलि** : ॐ भूर्भुवः स्वः सगणेशगौर्याद्यावाहित मातृः सांगाः सपरिवाराः सायुधाः सशक्तिकाः एभिर्गंधाद्युपचारैः वः अहं पूजयामि। सगणेशगौर्याद्यावाहित मातृभ्यः सांगाभ्यः सपरिवाराभ्यः सायुधाभ्यः सशक्तिकाभ्यः इमं सदीपं आसादितं बलिं सम॰। भो भो सगणेशगौर्याद्यावाहित मातरः इमं बलिं गृह्णीत मम सकुटुंबस्य सपरिवारस्य अभ्युदयं कुरुत। आयुः कर्त्र्यः क्षेमकर्त्र्यः शांतिकर्त्र्यः पुष्टिकर्त्र्यः तुष्टिकर्त्र्यः निर्विघ्नकर्त्र्यः कल्याणकर्त्र्यः वरदा भवत। अनेन पूजनपूर्वक बलिदानेन सगणेशगौर्याद्यावाहित मातरः प्रीयन्तां न मम। एकतंत्रपक्षे वसोर्धारा समन्वित सगणेश...

**वसोर्धाराबलि** : ॐ भूर्भुवः स्वः श्रीआदि वसोर्धाराः सांगाः... पूजयामि। श्रीआदि आवाहित वसोर्धाराभ्य... सम॰। भो भो श्री आदि आवाहित वसोर्धाराः इमं बलिं... भवत। अनेन पूजनपूर्वक बलिदानेन वसोर्धाराः प्रीयन्तां।

**योगिनीबलि** : श्री महाकाली महालक्ष्मी महासरस्वती सहिता गजाननादि (विश्वदुर्गादि) चतुःषष्टियोगिनीः सांगाः... अहं पूजयामि। सांगाभ्य... बलिं सम.। भो भो... योगिन्यः इमं बलिं गृह्णीत। मम... कुरुत। आयुः कर्त्र्यः क्षेमकर्त्र्यः शांतिकर्त्र्यः पुष्टिकर्त्र्यः तुष्टिकर्त्र्य निविघ्नकर्त्र्यः कल्याणकर्त्र्यः वरदा भवत। अनेन पूजन पूर्वक बलिदानेन श्री महाकाली, योगिन्यः प्रीयन्ताम्।

**वास्तोष्पतिबलि** : ॐ भूर्भुवः स्वः शिख्यादि (ब्रह्मादि) वास्तुमंडलदेवता सहितं वास्तुपुरुषं... पूज॰। मंडलदेवता सहिताय वास्तुपुरुषाय सांगाय... इमं आसादित बलिं सम॰। भो भो मंडलदेवतासहित वास्तुपुरुष इमं बलिं गृहाण मम सकुटुंबस्य सपरिवारस्य अभ्युदयं कुरु। मम गृहे आयुः कर्ता क्षेमकर्ता शांतिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता वरदो भव। अनेन पूजनपूर्वक बलिदानेन मंडलसहित वास्तुपुरुषः प्रीयतांम्।

**अजरादि** - ॐ भूर्भुवः स्वः अजरादि क्षेत्रपालदेवान् सांगान् सपरिवारान् सायुधान् सशक्तिकान् एभिः गंधाद्युपचारैः वः अहं पूजयामि। क्षेत्रपालदेवेभ्यः सांगेभ्यः सपरिवारेभ्यः

सायुधेभ्यः सशक्तिकेभ्यः इमं सदीपं आसादितबलिं सम०। भो भो क्षेत्रपालदेवाः सांगाः सपरिवाराः सायुधाः सशक्तिकाः इमं बलिं गृह्णीत। मम सकुटुंबस्य सपरिवारस्य अभ्युदयं कुरुत। आयुः कर्तारः क्षेमकर्तारः शांतिकर्तारः पुष्टिकर्तारः तुष्टिकर्तारः निर्विघ्नकर्तारः वरदा भवत। अनेन पूजन पूर्वक बलिदानेन क्षेत्रपालदेवाः प्रीयन्ताम्।

## एकतन्त्रेण नवग्रहबलिः

ॐ ग्रहाऽऊर्ज्जाहुतयो व्यन्तो विप्प्राय मतिम्। तेषां विशिप्प्रियाणां व्वोऽहमिषमूर्ज्ज ठं० समग्रभमुपयामगृहीतोऽसीन्द्राय त्त्वा जुष्ट्टंगृहाम्येष ते योनिरिन्द्राय त्त्वा जुष्ट्टत्तमम्। ॐ सूर्यादिनवग्रहेभ्यो नमः। सूर्यादिनवग्रहेभ्यः साङ्गेभ्यः सपरिवारेभ्यः सायुधेभ्यः सशक्तिकेभ्यः अधिदेवता-प्रत्यधिदेवता-गणपत्यादिपञ्चलोकपालवास्तोष्पतिसहितेभ्यः इमं सदीप-दधि-माष-भक्तबलिं समर्पयामि भो भो सूर्यादिनवग्रहाः। साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः अधिदेवता-प्रत्यधिदेवता-गणपत्यादिपञ्चलोकपाल वास्तोष्पतिसहिताः इमं बलिं गृह्णीत मम सकुटुम्बस्य सपरिवारस्य आयुः कर्तारः क्षेमकर्तारः शान्तिकर्तारः पुष्टिकर्तारः तुष्टिकर्तारः वरदा भवत। अनेन बलिदानेन साङ्गाः सूर्यादिनवग्रहाः प्रीयन्ताम्।
''ब्रह्मादि देवानां - सदीपं बलिं समर्पयामि।''
ब्रह्मादि देवताभ्यो सा० सप० सा० स० सहिताः बलिं समर्पयामि। भो भो ब्रह्मादि सर्वतो भद्रमंडल देवताभ्यो इमं बलि गृहाण। मम सपरिवारस्य अभ्युदयं कुरु आयुः कर्तारः क्षेमकर्तारः तुष्टीकर्तारः पुष्टीकर्तारः वरदा भवत। अनेन बलिदानेन सर्वतो भ्रदमण्डल देवता प्रीयन्ताम्।।

## अथ दुर्गा याग कूष्माण्ड बलिदानम्

आचम्य प्राणानायम्य। देशकालाद्युच्चार्य मम सकुटुम्बस्य सर्वाऽरिष्ट प्रशान्ति-सर्वाभीष्ट-कामसिद्धि-कल्पोक्तफलावाप्तिद्वारा श्री महाकालीमहालक्ष्मी-महासरस्वती-त्रिगुणात्मिका-स्वरूपिणी-श्री दुर्गादेवीप्रीत्यर्थं कूष्माण्डबलिदानं करिष्ये। तदङ्गत्वेन पञ्चोपचारैः बलिपूजनं च करिष्ये। तत्पश्चात् -
नमो देव्यै महादेव्यै शिवायै सततं नमः। नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम्।। इत्यनेन दुर्गादेवी पञ्चोपचारैः सम्पूज्य, तत्पुरतः स्वयंमुदङ्मुखो बलिं प्राङ्मुखं च पीठे वस्त्रगुण्ठितं कूष्माण्डं निधाय, कूष्माण्डबलये नमः, इत्यनेन-गन्ध-पुष्पादि-पञ्चोपचारैः सम्पूज्य, अभिमन्त्रयेत्।

पशुस्त्वं बलिरूपेण मम भाग्यादवस्थितः। प्रणमामि ततः सर्वरूपिणं बलिरूपिणम्।।१।।
चण्डिकाप्रीतिदानेन दातुरापद्-विनाशनम्। चामुण्डाबलिरूपाय बले तुभ्यं नमोऽस्तु ते।।२।।
यज्ञार्थं बलयः सृष्टाः स्वयमेव स्वयम्भुवा। अतस्त्वां घातयाम्यद्य यस्माद्यज्ञे मतो वधः।।३।।
ततः शस्त्रं गन्धादिनां सम्पूज्य, अभिमन्त्रयेत् - ऐं ह्रीं श्रीं। 'रसनात्वं चण्डिकायाः सुरोलकप्रसाधकः।' इति ह्रां ह्रीं खड्ग, आं। हुं, फट्, इति पठित्वा हस्ते शस्त्रं गृहीत्वा, वीरासनमुद्रया 'ॐ कालि कालि वज्रेश्वरि लोहदण्डाय नमः' इति पठनेन कूष्माण्डं छेदयेत् छेदनावसरे न विलोकयेत्। ततश्छिन्ने बलौ कुङ्कुममनुलेपयेत्। 'कौशिकि रुधिरेणाप्यायताम्' इति देव्यै अर्धं निवेद्य, अवशिष्टार्धस्य तेनैव खड्गेन पुनः पञ्चभागान् कृत्वा ॐ पूतनायै नमः बलिभागं निवेदयामि।
ॐ चरक्यै नमः बलिं निवेदयामि। विदार्यै नमः बलिं निवेदयामि। पापराक्षस्यै नमः बलिं निवेदयामि। शेष - क्षेत्रपालं बलिभागं निवेदयामि।
**क्षेत्रपाल बलिदानं -** एकस्मिन् वंशादि पात्रे शूर्पे च कुशा नास्तीर्य तदुपरि मनुष्याहार चतुर्गुणं द्विगुणं वा हरिद्रा कुङ्कुम कज्जल सिन्दूर रक्त पुष्प पताकादि युतं स ताम्बूलं-सदक्षिणं माष भक्त दध्योदनं जलपात्रं चनिधाय चतुर्मुखं दीपं प्रज्वाल्य बलिं दद्यात्। ॐ अद्येत्यादि - नामगोत्रोच्चार्य - सकलारिष्ट शान्तिपूर्वकं अमुक कर्मणः सिद्धयर्थं क्षेत्रपाल पूजनं बलिदानञ्च करिष्ये। इति संकल्प्य - पूगीफलोपरि क्षेत्रपालमावाहयेत् अक्षत पुष्पमादाय-
ॐ नहिस्प्पशमविदन्नन्यमस्माद् व्वैश्वानरात्पुर ऽएतारमग्नेः। एमेनमवृधन्नमृताऽअमर्त्यं वैश्वानरं क्षैत्रजित्याय देवाः।। इति 'क्षेत्रपालाय नमः इत्युक्त्वा क्षेत्रपालं षोडशोपचारैः पञ्चोपचारैर्वा सम्पूज्य प्रार्थयेत्। नमो वै क्षेत्रपालस्त्वं भूतप्रेतगणैः सह। पूजां बलिं गृहाणेमं सौम्यो भव च सर्वदा।।१।। पुत्रान् देहि धनं देहि सर्वान् कामांश्च देहि मे। आयुरारोग्यं मे देहि निर्विघ्नं कुरु सर्वदा।।२।। ततो बलिदानार्थं हस्ते जलं गृहीत्वा क्षेत्रपालाय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय मारीगण-भैरव-राक्षस-कूष्माण्डवेताल-भूत-प्रेत-पिशाच-डाकिनी-शाकिनी-पिशाचिनी-ब्रह्मराक्षसगणसहिताय इमं कुङ्कुम-रक्तपुष्पादियुतं सदीपं सताम्बूलं सदक्षिणं दधि-माष-भक्तबलिं समर्पयामि। भो क्षेत्रपाल! सर्वतो दिशं रक्ष बलि भक्ष मम सकुटुम्बस्य सपरिवारस्य आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता वरदो भव। अनेन बलिदानेन क्षेत्रपालः प्रीयताम्। बलिं गृह्णन्त्विमं देवा आदित्या मरुतश्चाश्विनौ रुद्राः सुपर्णाः पन्नगाः खगाः (नगाः)।।१।। असुरा यातुधानाश्च पिशाचोरगराक्षसाः। डाकिन्यो यक्षवेताला योगिन्यः पूतनाः शिवाः।।२।। जृम्भकाः सिद्धगन्धर्वा सौम्या विद्याधरा नगाः। दिक्पाला लोकपालश्च ये च विघ्नविनायकाः।।३।।

जगतां शान्तिकर्तारो ब्रह्माद्याश्च महर्षयः। मा विघ्नं मा च मे पापं मा सन्तु परिपन्थिनः। सौम्या भवन्तु तृप्ताश्च भूत-प्रेताः सुखावहाः।।४।। भूतानि यानीह वसन्ति तानि बलिं गृहीत्वा विधिवत्प्रयुक्तम्। अन्यत्र वासं परिकल्पयन्तु रक्षन्तु मां तानि सदैव चात्र।।५।। ततो दुर्ब्राह्मणो नापितो वा बलिपात्रं गृहीत्वा यजमानपृष्ठतोगत्वा यजमानमस्तकोपरि सकृद् भ्रामयित्वा तत् बलिपात्रं चतुष्पथे स्थापयेत्। यजमानश्च बलिं नीत्वा गच्छतः पृष्ठभागे मन्त्रं पठन् द्वारपर्यन्तमक्षतं जलं वा क्षिपेत् - ॐ हिङ्काराय स्वाहा हिङ्कृताय स्वाहा क्रन्दते स्वाहा ऽवक्रन्दाय स्वाहा प्रोथते स्वाहा प्रप्रोथाय स्वाहा गन्धाय स्वाहा घ्राताय स्वाहा निविष्टाय स्वाहोपविष्टाय स्वाहा सन्दिताय स्वाहा वल्गते स्वाहाऽऽसीनाय स्वाहा शयानाय स्वाहा स्वपते स्वाहा जाग्रते स्वाहा कूजते स्वाहा प्रबुद्धाय स्वाहा विजृम्भमाणाय स्वाहा विचृत्ताय स्वाहा सꣳ हानाय स्वाहोपस्थिताय स्वाहाऽयनाय स्वाहा प्रायणाय स्वाहा।। ततो यजमानः पाणिपादं प्रक्षाल्याचम्य स्वासने उपविशेत्।

''कश्चित् पुस्तकेषु भूतेभ्यो बलिदानम्'' यजमान सपरिवार चतुष्पथ जाकर क्षेत्रपालबलि अनुसारेण पूजा बलिदान करे।

**इति बलिदान प्रयोगः**

# पूर्णाहुति

''पूर्णाहुत्या सर्वान् कामानवाप्नोति''

पूर्णाहुति से मनुष्य समस्त कामनाओं को प्राप्त करता है।

### ।।पूर्णाहुति कहां-कहां नहीं करे।।

विवाहे व्रतबन्धे च शालायां चौलकर्मणि। गर्भाधानादिसंस्कारे पूर्णाहुतिं न कारयेत्।। विवाहादि क्रियायां च शालायां वास्तुपूजने! नित्य होमे वृषोत्सर्गे न पूर्णाहुतिमाचरेत्।। (यज्ञ मिमांसा) मदरत्ने''

**मात्स्येऽपि -** शतान्ते वा सहस्रान्ते सम्पूर्णाहुतिरिष्यते। उतिष्ठन्मनसा ध्यात्वा वह्निमाज्य फलेन च।। (वि॰प॰)

**अथ सङ्कल्पः -** ''नाम गोत्रोच्चार्य'' - मम सकल कामना सिद्ध्यर्थं बहु धन धान्य प्राप्तये देवादि - प्रीत्यर्थं ब्राह्मणद्वारा मत्कारिते अमुक कर्मणि श्री गणपति गौर्याद्यावाहितेष्ट देवता प्रीतये च स्वैर्मन्त्रै यव-तिलतण्डुलाज्याहुतिः परिपूर्णता सिद्धये वसोर्धारा समन्वितं पूर्णाहुति होममहं करिष्ये। इति संकल्प्य।

(नारिकेल या गिरि गोला) स्रुक में चार या बारह बार घी भरकर कौशेय वस्त्र मोली बांधकर शंख मुद्रा में स्रुक स्रुच को पकड़कर स्थिरचित होकर गन्धाक्षतपुष्पादि से पूजा करे।)

**पूर्णाहुतिपूजनमन्त्राः** – कल्याणदात्रीं कल्याणीं सर्वकामप्रपूरणीम्। हवनस्य फलप्राप्त्यै पूर्णाहुत्यै नमो नमः।। पुनः यजमानस्य रक्तवस्त्रवेष्टितं श्रीफलं (नारिकेलफलं) स्रुच्यामुपरि संस्थाप्य 'ॐ पूर्णाहुत्यै नमः' इति यथोपचारद्रव्यैः श्रीफलं सम्पूजयेत्। पश्चात् श्रीफलसंहितां स्रुचीं गृहीत्वा उत्थाय पूर्णाहुतिं कुर्यात्। (श्री जगदीश्वरं मनसा ध्यायन् शंखतूर्यादि घोषैः)

**पूर्णाहुतिमन्त्राः** – ॐ समुद्रादूर्मिर्मधुमाँ२।। उदारदुपा ठं॰ शुना सममृतत्वमानट्। घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानां मृतस्य नाभिः।। वयं नाम प्रब्रवामा घृतस्यास्मिन्यज्ञे धारयामा नमोभिः। उप ब्रह्मा शृणवच्छस्यमानं चतुः शृङ्गोऽवमीद्गौर एतत्।चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य। त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां२।। आविवेश।। त्रिधा हितं पणिभिर्गुह्यमानं गवि देवासो घृतमन्वविन्दन्। इन्द्र एक ठं॰ सूर्य एकं जजान वेनादेक ठं॰ स्वधया निष्टतक्षुः।। एता अर्षन्ति हृद्यात्समुद्राच्छतव्रजा रिपुणा नावचक्षे। घृतस्य धाराअभिचाकशीमि हिरण्ययो वेतसो मध्य आसाम्।। सम्यक् स्रवन्ति सरितो न धेना अन्तर्हृदा मनसा पूयमानाः। एते अर्षन्त्यूर्मयो घृतस्य मृगा इव क्षिपणोरीषमाणाः।। सिन्धोरिव प्राध्वने शूघनासो वातप्रमियः पतयन्ति यह्वाः। घृतस्य धारा अरुषो न वाजी काष्ठा भिन्दन्नूर्मिभिः पिन्वमानः।। अभिप्रवन्त समनेव योषाः कल्याण्यः स्मयमानासोअग्निम्। घृतस्य धाराः समिधो नसन्त ता जुषाणो हर्यति जातवेदाः।। कन्या इव वहतुमेतवा उ अञ्ज्याञ्जाना अभिचाकशीमि। यत्र सोमः सूयते यत्र यज्ञो घृतस्य धारा अभि तत्पवन्ते। अभ्यर्षत सुष्टुतिं गव्यमाजिमस्मासु भद्रा द्रविणानि धत्त। इमं यज्ञं नयत देवता नो घृतस्य धारा मधुमत्पवन्ते।। धामं ते विश्वं भुवनमधि श्रितमन्तः समुद्रे हृद्यन्तरायुषि। अपामनी के समिथे य आभृतस्तमश्याम मधुमन्तन्त ऊर्मिम्। पुनस्त्वादित्या रुद्र वसवः समिन्धतां पुनर्ब्रह्माणो वसुनीथ यज्ञैः। घृतेन त्वं तन्वं वर्धयस्व सत्याः सन्तु यजमानस्य कामाः।। सप्त ते अग्ने समिधः सप्त जिह्वाः सप्त ऋषयः सप्त धाम प्रियाणि। सप्त होत्राः सप्तधात्वा यजन्ति सप्त योनीरापृणस्वा घृतेन स्वाहा।। मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निम्। कवि ठं॰ सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः।। पूर्णा दर्वि परापत सुपूर्णा पुनरापत। वस्नेव विक्रीणावहा इषमूर्ज ठं॰ शतक्रतो।।

(तत्पश्चात् स्रुचि में स्थित नारिकेल को अग्निकुण्ड में यथोचित रूप से यजमान सीधा रख दें। तदनन्तर स्रुचि स्थित घृत के शेष को इस वाक्य का उच्चारण करके प्रोक्षणी पात्र में त्याग करें – ॐ इदमग्नये वैश्वानराय वसुरुद्रादितेभ्यः शतक्रतवे सप्तवते अग्नये अद्भयश्च नमम्।

# वसोर्धारा होमः

पूर्णाहुति के पश्चात वसोर्धारा पूजन करावे।

**प्रार्थना -** दिव्यवस्त्रा दिव्यदेहा नानालङ्कारभूषिताः। वसोर्द्धारा महाभागा वरदाः सन्तु मे सदा।। शुद्धस्फटिकसंकाशा दिव्यायुधकरावृताः। एकभोगाः साक्षसूत्राः वसोर्द्धारा नता वयम्।।

(निम्नविधान के अनुसार करे।)

यजमान तो स्तम्भों में धारण की हुई, उदुम्बर की सीधी मनोहरा बाहुमात्रप्रमाण की वसोर्धारा को प्रागग्र रख, उसके ऊपर शृंखला से परिपूर्ण निर्मल घृत से ताम्र आदि द्वारा नीचे यवमात्र छिद्र द्वारा घृत को छोड़ते हुए अग्नि के ऊपर वसोर्धारा गिरावे। यजमान उसके मुख में सोने की जिह्वा बाँधे और स्रुचि पात्र द्वारा नाली से अग्नि में घृतधारा गिरावे। उस समय आचार्य व सभी ब्राह्मण निम्न मन्त्रों का उच्चारण करते हुए होम करावें- ॐ सप्त ते अग्ने समिधः सप्त जिह्वाः सप्त ऋषयः सप्त धाम प्रियाणि। सप्त होत्राः सप्तधा त्वा यजन्ति सप्त योनीरापृणस्व घृतेन स्वाहा।। शुक्रज्योतिश्च चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्माँश्चा शुक्रश्च ऋतपाश्चात्य ठ॰ हाः।। ईदृङ् चान्यादृङ्च सदृङ्च प्रतिसदृङ्। मितश्च संमितश्च सभराः।। ऋतश्च सत्यश्च ध्रुवश्च धरुणश्च। धर्ता च विधर्ता च विधारयः।। ऋतजिच्च सत्यजिच्च सेनजिच्च सुषेणश्च। अन्तिमित्रश्च दूरेअमित्रश्च गणः।। ईदृक्षास एतादृक्षासऽऊषणुः सदृक्षासः प्रतिसदृक्षास एतन। मितासश्च संमितासो नो अद्य सभरसो मरुतो यज्ञे अस्मिन्।। स्वतवांश्च प्रघासी च सान्तपनश्च गृहमेधी च। क्रीडी च शाकी चोज्जेषी।। इन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मानोऽभवन्यथेन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मानोऽभवन्। एवमिमं यजमानं दैविश्च विशो मानुषीश्चानुवर्त्मानो भवन्तु।। इम ठ॰ स्तनमूर्जस्वन्तं धयापां प्रपीनमग्ने सरिरस्य मध्ये। उत्सं जुषस्व मधुमन्तमर्वन्समुद्रिय ठ॰ सदनमाविशस्व।। घृतं मिमिक्षे घृतमस्य योनिर्घृते श्रितो घृतम्वस्य धाम। अनुष्वधमावह मादयस्व स्वाहाकृतं वृषभ वक्षि हव्यम्।। वसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्रधारम्। देवस्त्वा सविता पुनातु वसोः पवित्रेण शत धारेण सुप्वा कामधुक्षः स्वाहा।।

यजमान हवन के पश्चात् जो घृतादि शेष हो उसे प्रोक्षणीपात्र में इस वाक्य का उच्चारण करके छोड़ दें - 'ॐ इदमग्नये वैश्वानराय न मम।' आचार्य निम्न श्लोकों का उच्चारण करके यजमान से अग्निदेवता की प्रार्थना करवाये -

श्रद्धां मेधां यशः प्रज्ञां विद्यां पुष्टिं श्रियं बलम्। तेज आयुष्यमारोग्यं देहि मे हव्यवाहन!।।१।।
भो भो अग्ने! महाशक्ते! सर्वकर्मप्रसाधन! कर्मान्तरेऽपि सम्प्राप्ते सान्निध्यं कुरु सर्वदा।।२।।
(ईशान कोण से भस्म ग्रहण करे।)

अथ भस्मवंदनं त्र्यायुषकरणञ्च ततः कुण्डात्स्थण्डिलाद्वा दग्धीभूतात्पूर्णाहुतिनारिकेलात् स्रुवविलपृष्ठेन विभूतिं गृहीत्वा दक्षिणाऽनामिकया तिलकधारणमित्याचार्यः पूर्वमात्मनः पश्चाद्यजमानस्य भस्माङ्कयेत्तत्र मन्त्रः - ॐ त्र्यायुषं जमदग्नेरिति ललाटे। कश्यपस्य त्र्यायुषमिति ग्रीवायाम्। यद्देवेषु त्र्यायुषमिति दक्षिणबाहुमूले। तन्नो अस्तु त्र्यायुषमिति हृदि वामस्कन्धे च यजमानपक्षे 'तन्नो' इत्यस्य स्थाने 'तत्ते' इति वाच्यम। सर्वहोमं हुत्वा संश्रवप्राशनम् - ततः प्रोक्षणीपात्रे प्रक्षिप्तस्य आज्यस्य यजमानेन अनामिकांगुष्ठाभ्यां प्राशनं कार्यम्।

**मन्त्र -** ॐ यस्माद्यज्ञपुरोडाशाद्यज्वानो ब्रह्मरूपिणः। तं संस्रवपुरोडाशं प्राश्नामि सुखपुण्यदम्। ततः आचम्य प्रणीतापात्रे निहिते पवित्रे आदाय ग्रन्थि मुक्त्वा ताभ्यांशिर:सम्मृज्य ते पवित्रे अग्नौ प्रक्षिपेत्।

# पूर्णपात्र प्रमाणं

"अष्टमूर्ति भवेत्किञ्चित्किञ्चिदष्टौ च पुष्कलम्। पुष्कलान च चत्वारिपूर्णपात्रं - तदुच्यते।। (यज्ञपार्श्वे) (वि॰प॰)।

द्वात्रिंशत्पलमाने न निर्मितं ताम्रपात्रकम्। तण्डुलैस्तत्समापूर्य सहिरण्यं सदक्षिणम्। दद्याद विप्राय त तुष्टमै पूर्णपात्र मितीरितम्।। (पुरश्चर्याणवे) (वि॰प॰)

श्री चतुर्थी लालकृत ग्रन्थानुसारेण - (षट् पञ्चाशदधिक यजमान मुष्टि शतद्वय परिमित तण्डुलाद्यन्न पूर्णम्) ।।इति पूर्णपात्र प्रमाणम्।।

**ततो ब्रह्मणे सदक्षिणपूर्णपात्रदानम् -** ॐ अद्येत्यादिकृतैतदमुक - होमकर्मणः प्रतिष्ठार्थमिदं पूर्णपात्रं सदक्षिणं प्रजापतिदैवतं ब्रह्मणे तुभ्यमहं संप्रददे। ॐ स्वस्तीति प्रतिवचनम्। ततो ब्रह्मग्रन्थिविमोकः। ततः सजलप्रणीतामग्नेः पश्चादानीय - ॐ सुमित्रिया न आप ओषधयः सन्तु ॐ आपः शिवाः शिवतमाः शान्ताः शान्ततमास्तास्ते कृणवन्तु भेषजम्। इतिमन्त्रेण प्रणीतोदकं सवित्रोपयमनकुशादीनाऽऽदाय यजमानशिरस्यभिषिच्य ॐ दुर्मिमित्रयास्तस्मै सन्तु योऽस्मान्द्वेष्टि यञ्च वयं द्विष्मः। इत्यैशान्यां प्रणीता न्युब्जीकुर्यात्। उपयमनकुशानग्नौ प्रहरेत्। अथ बर्हिहोमः - ततः आस्तरण क्रमेण बर्हिरुत्थाप्याज्येनाभिधार्य- ॐ देवा गातु विदो गातु वित्वा गातु मित मनसस्पत इमं देव यज्ञ ठ॰ स्वाहा वातेधाः स्वाहा। इति हस्तेनैव जुहुयात्।

# अथ दशांशतर्पणमार्जनविधिः

एवं होमं समाप्य पात्रस्थजले जपदेवतां गन्धपुष्पादिना सम्पूज्य होमदशांशेन सतीर्थाम्बुदुग्धमिश्रजलेन मूलमन्त्रान्ते ॐ साङ्गं सपरिवारम् अमुक देवतां तर्पयामि इत्युक्त्वा तर्पणं कुर्यात् ततस्तर्पणदशांशेन मूलमन्त्रान्ते, आत्मानमभिषिञ्चामि नमः। इति तर्पणसिञ्चितातिरिक्तशुद्ध जलेन यजमानमूर्धनि पृथिव्यां वा मार्जनं कुर्यात्। (अभिषिञ्चामि (वा) मार्जयामि)

# अभिषेक विधिः

ततो ग्रहवेदी कलशः प्रधानदेवताकलशानामुदकमेकस्मिन्पात्रे एकीकृत्य दूर्वापञ्चपल्लवैरुदङ्मुख आचार्यस्तिष्ठन् जापकाश्च पत्नीं परिवारश्च वामतः कृत्वा यजमानं प्राङ्मुखमुपविष्ठमभिषिञ्चेयुरेभिर्मन्त्रैः – ॐ आपो हि ष्ठामयो भुवस्तान ऊर्जे दधातनः।।१।। ॐ महेरणाय चक्षसे यो वः शिवतमो रसस्तस्य भाजयतेह नः। उशतीरिव मातरः।।२।। ॐ तस्मा अरङ्गमाम वो यस्य क्षयाय जिन्वथ। आपो जनयथाच नः।।३।। ॐ वरुणस्योत्तम्भनमसि व्वरुणस्य स्कम्भसर्जनीस्थो वरुणस्य ऋतसदन्यसि वरुणस्य ऋतसदनमसि वरुणस्य ऋतसदनमासीद।।४।। पुनन्तु मा देवजनाः पुनन्तु मनसा धियः पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा।।५।। ॐ पयः पृथिव्यां पय ओषधीषु पयो दिव्यन्तरिक्षे पयोधाः। पयस्वतीः प्रदिशः सन्तु मह्यम्।।६।। ॐ देवस्य त्वा सवितुः प्रसवेश्विनोर्बाहुभ्याम्पूष्णोर्हस्ताभ्याम्। सरस्वत्यै वाचो यन्तु यन्त्रिये दधामि बृहस्पतेष्ट्वा साम्राज्येनाभिषिञ्चामि।।७।। ॐ द्यौः शान्तिरन्तरिक्ष ठं॰ शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिर्वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिब्रह्म शान्तिः सर्व ठं॰ शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि।।८।।

**ॐ सुरास्त्वामभषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः**। वासुदेवो जगन्नाथस्तथा सङ्कर्षणो विभुः।।१।। प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते आखण्डलोऽग्निर्भगवान् यमो वै निर्ऋतिस्तथा।।२।। वरुणः पवनश्चैव धनाध्यक्षस्तथा विभुः। ब्रह्मणा सहिताः सर्वे दिक्पालाः पान्तु ते सदा।।३।। कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः। बुद्धिर्लज्जा वपुः शान्तिस्तुष्टिः कान्तिश्च मातरः।।४।। एतास्त्वामभिषिञ्चन्तु देवपत्न्यः समागताः। आदित्यश्चन्द्रमा भौमो बुधजीवसितार्कजाः।।५।। ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च तर्पिताः। देवदानवगन्धर्वा यक्षराक्षसपन्नगाः।।६।। ऋषयो मनवा गावो देवमातर एव च। देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसां तथा। अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च। औषधानि च रत्नानि कालस्यावयवाश्च ये।।७-८।।

सरितः सागराः शैलास्तीर्थानि जलदा नदाः एते त्वामभिषिञ्चन्तु धर्मकामार्थसिद्धये।।९।।
आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः। अभिषिश्चन्तु ते सर्वे धर्मकामार्थसिद्धये।।१०।।
अमृताभिषेकोऽस्तु।।
(दक्षिणा दानादि के बाद एवं छायापात्र दान से पूर्व भी अभिषेक कर सकते हैं।)

# श्रेयोदानविधिः मंगलस्नानम्

अथ मङ्गलस्नानं विधाय वस्त्रान्तरपरिधानं कृत्वा सपत्नी को यजमानः मण्डपमागत्य मङ्गलतिलकं धृत्वा श्रेयोदानं स्वीकुर्यात्। उदङ्मुखा ऋत्विजः पृथक् पृथक् श्रेयोदानं कुर्वन्ति, तत्र आचार्य एक एव वा तत्र प्राङ्मुखे यजमानहस्ते – ॐ शिवा आपः सन्तु इति जलम्, ॐ सौमनस्यमस्तु इति पुष्पम्, अक्षतं चारिष्टं चास्तु इत्यक्षतांश्च दत्वा, पूगीफलफलादिकञ्चादाय, ॐ भवन्नियोगेन मया श्री अमुकदेवप्रीत्यर्थं कृतो यः साङ्गपाठहोमस्तदुत्पन्नं यच्छ्रेयस्तत् तुभ्यमहं सम्प्रददे तेन श्रेयसा त्वं श्रयोवान् भव। इति फलादिकं यजमानाय दद्युः यजमानश्च सुगुप्तदेशे स्थापयेत्, यथावसरं भक्षयेच्च।

# अथ दक्षिणादान विधिः

आचार्यदीन्सम्पूज्य ॐ तत्सदद्य॰ कृतस्य अमुककर्मणः साङ्गतासिद्ध्यर्थं तत्सम्पूर्णफलप्राप्तये च आचार्यादिभ्यो महर्त्विग्भ्यः सूक्तपाठकेभ्योऽ मुकमन्त्रजापकेभ्यो हवनर्कतृभ्योऽन्येभ्यो देवयजनमागतेभ्यश्च नाना गोत्रेभ्यो नानाशर्मभ्यो ब्राह्मणेभ्यो यथोक्तदक्षिणां तन्निष्क्रयभूतं यथाशक्त्येदं द्रव्यं रुद्रदैवतं विभज्याहं सम्प्रददे न मम। इत्येष एव सङ्कल्पोऽनुष्ठेयः (अथवा) ॐ त॰ कृतस्य अमुककर्मणः साङ्गतासिद्ध्यर्थम् आचार्यादिभ्यो ब्राह्मणेभ्यः इमां दास्यमानां वा मनसोद्दिष्टां दक्षिणां विभज्य दातुमहमुत्सृजे। अथवा। ॐ त॰ कृतयोः अमुककर्मणोः साङ्गतासिद्ध्यर्थं दास्यमानं हिरण्यनिष्क्रयभूतं द्रव्यम् अमुकामुकगोत्राभ्याम् अमुकामुकशर्म्मभ्यां ब्राह्मणाभ्यां युवाभ्यामहं सम्प्रददे।। (अथवा) ॐ तत्स॰ कृतानाम् अमुकाककर्मणां साङ्गतासिद्ध्यर्थं हिरण्यनिष्क्रयिणी दक्षिणाममुकगोत्रेभ्यः अमुककामुकशर्म्मभ्यः ब्राह्मणेभ्यः युष्मभ्यमहं सम्प्रददे। (अथवा) ॐ तत्स॰ कृतस्य अमुककर्मणः साङ्गतासिद्ध्यर्थंमिमां दक्षिणां हवनकर्त्रे ऋत्विजे तु॰।। वा ऋत्विग्भ्यां दातुमहमुत्सृजे।। वा यथासंख्याकं ऋत्विग्भ्यो दातुमहमुत्सृजे।। इति ब्राह्मणान् जपानुसारेण दक्षिणावस्त्रालङ्कारादिभिः परितोष्य प्रणमेत् ततो ब्राह्मणः स्वस्ति इत्युक्त्वा दक्षिणां स्वीकृत्य ॐ आदित्या वसवोरुद्रेति मंत्रेण यजमानललाटे तिलकं कुर्यात्।।

# अथ ब्राह्मणभोजन संकल्पः

ॐ तत्सदद्य॰ कृतस्यामुककर्मणः सम्पूर्णतासिद्धये यथोपन्नेनान्नेन यथाकालं यथासंख्यकान् नानागोत्रान् नानाभिधान् ब्राह्मणान् (वा-कन्याबटुकादीन्) भोजयिष्ये दक्षिणाश्च दास्ये इति सङ्कल्प्य यथाकालं ब्राह्मणान् भोजयेत्। तत आचार्याय गां तन्मौल्यं वा दद्यात्।

# गोदान संकल्पः

ॐ तत्स॰ ममामुककर्मसाङ्गतासिद्ध्यर्थम् अमुकगोत्रायामुकशर्म्मणे ब्राह्मणाय यथाशक्त्यलंकृतामिमां सवत्सां गां रुद्रदैवत्यां तुभ्यं सम्प्रददे न मम, इति कुसुमाक्षतसमन्वितं जलं सपुच्छं ब्राह्मणहस्ते दद्यात्, ब्राह्मणस्तु ॐ कोदादिति मन्त्रं पठित्वा ॐ स्वस्तीति ब्रूयात्। ॐ त॰ कृतैतद्गोदान प्र॰। प्रत्यक्षायाः गोरभावे तु तन्निष्क्रयं निष्कपरिमितं तदर्द्धं वा हिरण्यं दद्यात् - अस्मिन् पक्षे, गोनिष्क्रयभूतमिदं हिरण्यमग्निदैवतं (वा हिरण्यमूल्योपकल्पितं रुद्रदैवतं) तुभ्यं सम्प्रददे न मम। इति आचार्यहस्ते जलाक्षतयुतं द्रव्यं दद्यात् आचार्यः ॐ स्वस्तीति वदेत्।

# अथ भूयसीदक्षिणासंकल्पः

ॐ अद्य॰ पुराणोक्तफलप्राप्तिपूर्वककृतेऽस्मिन् अमुकयागकर्मणि न्यूनातिरिक्तदोषपरिहारार्थ, नानावेदान्तर्गतनानाशाखाध्यायिभ्यो नानागोत्रेभ्यो ब्राह्मणेभ्यो दीनानाथेभ्यो अन्धपङ्गुभ्यश्च यथाशक्ति यथोत्साहं भूयसीं दक्षिणां विभज्य दातुमहमुत्सृजे ॐ तत्सत् इतिवदन् यथाशक्ति भूयसीं दक्षिणां दद्यात्।

# अथ छायापात्रदानम्

छायापात्रं स्वपुरस्तिलराश्युपरि संस्थाप्य तत्र धारितशुद्धगोघृतं पूरयेत्, ततः सपत्नीको यजमानः स्वमुखमवलोकयेत्, तत्र मन्त्रौ - ॐ आज्यं सुराणामाहारमाज्यं पापहरं परम्। आज्यमध्ये मुखं दृष्ट्वा सर्वपापैः प्रमुच्यते।।१।। घृतं नाशयते व्याधिं घृतश्च हरते रुजम्। घृतं तेजोधिकरणं घृतमायुः प्रवर्द्धते।।२।। इति मुखं दृष्ट्वा हिरण्यं पंचरत्नानि वा प्रक्षिपेत्। ततस्सोपकरणैस्तत्कांस्य-पात्रोपन्यस्त घृतबिम्बप्रतिबिम्बितात्म छाया पात्राय नमः, एवं गन्धादिभिः पूजयेत्। ॐ अद्य॰ अमुकदेवप्रीतिपूर्वकसोपकरणच्छाया पात्रदानं ददामि। इति विप्रकरे जलं दद्यात्।
**संकल्प -** अद्येत्यादिदेशकालसङ्कीर्तनान्ते - अमुकगोत्रोत्पन्नोहं जन्मनामतः प्रसिद्धनामतश्चामुकशर्मा सपत्नीकोऽहं मम कलत्रादिभिस्सह दीर्घायुरारोग्यसु तेजस्वित्वसुभगत्वसर्वं पापप्रशमनोत्तर जन्मराशेस्सकाशान्नामराशेस्सकाशाद्वा जन्मलग्नाद्वर्षलग्नाद्गोचराद्वा ये केचिच्चतुर्थाष्टम् द्वादशाद्यनिष्टस्थान-स्थिताः क्रूरग्रहास्तैः

सूचितं सूचयिष्यमाणञ्च यत्सर्वारिष्टं तद्विनाशार्थं सर्वदा तृतीयैकादश शुभस्थान स्थितवदुत्तमफलप्राप्त्यर्थं कांस्यपात्रोपन्यस्तं घृतबिन्दुकणिका समसंख्यावच्छिन्ननैरुज्य चिरञ्जीवित्वकामैतत्स्वशरीर छायावलोकितघृतपूरितं कांस्यपात्रं पञ्चरत्नादिसहितं सुपूजितं श्री महामृत्युञ्जयदेवताप्रीत्यर्थं चन्द्रमाप्रजापतिबृहस्पतिदैवतं यथानामगोत्राय ब्राह्मणाय दातुमहमुत्सृजे। ॐ अद्य कृतैतच्छायापात्रदानप्रतिष्ठार्थमेतद्द्रव्यममुकदैवत्तं यथानामगोत्राय०। ततः प्रार्थयेत् – ॐ यानि कानि च पापानि मया कामं कृतानि च। छायापात्रप्रदानेन तानि नश्यन्तु मे सदा।।१।। यत्कृतं मे स्वकायेन मनसा वचना त्वघम्। तत्सर्वं नाशमायातु छायापात्रप्रदानतः।।२।। इति पठित्वा हस्तद्वयेन तत्पात्रं गृहीत्वा ब्राह्मणाय समर्पयेत् – ॐ सदक्षिणं मया तुभ्यं स्वात्मदेहमिदं परम्। छायापात्रपरं प्रीत्या गृहाण द्विजसत्तम। दानेनानेन मा सन्तु सर्वे रोगादयो मम। आयुरारोग्यमैश्वर्यं प्रददातु दिवाकरः।। इत्युच्चार्य छायापात्रं ब्राह्मणहस्ते दद्यात्।। **अथवा** – आज्यपात्रे छायामवलोक्य देशकालौ स्मृत्वा ममायुरारोग्यप्राप्तये ससुवर्णमिदमाज्यपात्रममुक-गोत्रायामुकर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे। इति कस्मैचित ब्राह्मणाय दद्यात्।

## उत्तरपूजनम्

ॐ तत्स० कृतस्य – अमुककर्मणः साङ्गत्वसिद्ध्ये मृडाग्निसहित आवाहितदेवानामुत्तरपूजनं करिष्ये। इति सङ्कल्प्य, आयतनाद्बहिर्वायव्यां दिशि ॐ स्वाहास्वधायुतमृडाग्नये नमः इति मन्त्रेणाग्निं गन्धादिपञ्चोचारैः सम्पूज्य स्थापितदेवतानामुत्तरंपूजनं कुर्यात् – ॐ भूर्भुवः स्वः श्रीगणपत्यादिस्थापितदेवताभ्यो नमः इति गन्धादिपञ्चोपचारैः सम्पूज्य ॐ अनया पूजया स्वाहास्वधायुतो मृडाग्निः स्थापितदेवताश्च प्रीयन्तामित्युत्सृजेत्। ततो गीतवादित्रशङ्खध्वन्यादिभिः सह नीराजनम्- साज्यं त्रिवर्तिसंयुक्तं वह्निना योजितं मया। दीपं गृहाण देवेश त्रैलोक्यतिमिरापहम्। (अन्नावसरे केचिदारार्तिक्यमपि पठन्ति)।। अग्नि की प्रदक्षिणा करे।

## अथाशीर्वादः

(वस्त्रेण शिर आच्छाद्य) ॐ स्वस्ति न इन्द्रो० दधातु।।१।।

श्रीवर्चस्व मायुष्यमारोग्यमाविधात्पवमानम्महीयते। धान्यं धनं पशुं बहुपुत्रलाभं शतसंवत्सरं दीर्घमायुः।।२।।

ॐ पुनस्त्वादित्या रुद्रा वसवः समिन्धताम्पुनर्ब्रह्माणो वसुनीथयज्ञैः। घृतेन त्वन्तन्व वर्धयस्व सत्याः सन्तु यजमानस्य कामाः।।३।।

मन्त्रार्था: सफला: सन्तु पूर्णा: सन्तु मनोरथा:। शत्रूणां बुद्धिनाशोस्तु मित्राणामुदयस्तव।।४।। आयुष्कामो यशस्काम: पुत्रपौत्रस्तथैव च। आरोग्यं धनकामश्च सर्वे कामा भवन्तु ते।।५।। विघ्ना विनाशमायान्तु नाशमायान्तु शत्रव:। प्रयत्ना सफला: सन्तु पूर्णा: सन्तु मनोरथा: (इत्यक्षतफलसहिताभिराशीर्भिराशीर्वाद:)। यजमानो विप्रहस्ताल्लब्धानि आशीर्दात्मक-नारिकेलादीनि फलानि मङ्गलसूत्रं च स्वपत्न्या अञ्चले निदध्यात्।

**।।क्षमाप्रार्थनां कुर्यात् देवताग्नि विसर्जनम्।।**

**हस्ते अक्षत पुष्पमादाय**

**ॐ यान्तु देव ( मातृ: ) गणा: सर्वे स्वशक्तया -** पूजिता मया। इष्टकामप्रसिद्ध्यर्थं पुरागमनाय च।।१।। ॐ उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे। उपप्रयन्तु मरुत: सुदानवऽइन्द्र प्राशुर्भवाशचा।।२।। शिरसि करौ कृत्वा भूमौ जानुभ्यां पतित्वा - ॐ ये च ब्रह्मादयो देवा अस्मिन् यज्ञे समागता:। स्वस्वस्थानं व्रजन्त्वेते शान्ति कुर्वन्तु मे सदा।।३।। भक्तिहीनं क्रियाहीनं विधिहीनश्च यत्कृतम्। देवा क्षमध्वं तत्सर्वं सर्वदेव कृपाकरा:।।४।। ॐ आवाहितदेवता: स्वस्वस्थानानि गच्छत।। गच्छत्वं भगवन्नग्ने स्वस्थाने कुण्डमध्यत:। हुतमादाय देवेभ्य: शीघ्रं देहि प्रसीद मे।। गच्छ गच्छ सुरश्रेष्ठ स्वस्थाने परमेश्वर। यत्र ब्रह्मादयो देवास्तत्र गच्छ हुताशन।। ॐ यज्ञं यज्ञं गच्छ यज्ञपतिं गच्छ स्वां योनिं गच्छ स्वाहा। एष ते यज्ञो यज्ञपते सहसूक्तवाक: सर्ववीरस्तञ्जुषस्व स्वाहा।। श्रीगणपतिलक्ष्म्यौ ! यजमानगृहे तिष्ठतम् इति सम्प्रार्थ्य गणपतिपीठस्थपूगीफलं गृहे स्थापयेत्। इति पुष्पाक्षतप्रक्षेपेण स्थापितसर्वकलशदेवताग्निश्च विसृज्य सर्वदेवपीठानि सदक्षिणाकानि अमुकगोत्राय अमुकशर्म्मणे आचार्याय तु०। स्वस्तीति प्रतिवचनम्। तत: - ॐ मया यत्कृतं यथावकाशं यथाज्ञानं यथाशक्ति च अमुककर्म तेन श्री अमुकदेव: प्रीयताम्। इति जलाक्षतक्षेपेण कर्मेश्वरार्पणं कुर्यात्। तत: शेषयज्ञोपकरणादिकम् आचार्य दत्वा, साक्षतकरौ सम्पुटीकृत्य- ॐ मया यत्कृतम् अमुकदेवता "मन्त्रपुरश्चरणाख्यं" (हवनशान्त्याख्यं वा) यज्ञकर्म तत्कालहीनं भक्तिहीनं श्रद्धाहीनं द्रव्यहीनञ्च भवतां ब्राह्मणानां वचनात् श्रीगणपत्याद्यावाहित देवताप्रसादाच्च सर्वविधै: परिपूर्णमस्त्विति भवन्तो ब्रुवन्तु।। अस्तु परिपूर्णम्, इति ब्राह्मणा ब्रूयु:। तत आचार्य: यजमानस्य शिरसि करं धृत्वा - ॐ भद्रमस्तु शिवं चास्तु महालक्ष्मी: प्रसीदतु। रक्षन्तु त्वां सदा देवा: सम्पद: सन्तु सर्वदा।। इति वदेत्।

**।।इति होम प्रकरणम्।।**

**जप होमौ तर्पणञ्चाभिषेको विप्र भोजनम्।**
**पञ्चाङ्गोपासनं लोके पुरश्चरणमिष्यते।।**

**।।सूर्य चन्द्र ग्रहणे स्पर्शान्मोक्ष पर्यन्तं जपकरणे पुरश्चरण फलम्।।**

# गंगादिनदीस्नानार्थं हेमाद्रिसङ्कल्पः

ॐ स्वस्ति श्रीसमस्तजगदुत्पत्तिस्थितिलयकारणस्य रक्षाशिक्षाविचक्षणस्य प्रणतपारिजातास्य अच्युतानन्तवीर्यस्य श्रीमद्भगवतो महापुरुषस्य श्रीमदादिनारायणस्य अचिन्त्यापरिमितशक्त्या ध्रियमाणानामव्यक्तमहदहङ्काराकाशवायुतेजोऽम्भः पृथिव्यावरणैरावृतानामनेक-कोटिब्रह्माण्डानामेकतमे आधारशक्तिवराहकूर्माणामुपरिष्टात् स्थितस्य महाकालायमान-श्रीफणिराजशेषस्य सहस्रफणामणिमण्डलमण्डिते ऐरावत-पुण्डरीक-वामनकुमुदाञ्जन-पुष्पदन्त-सार्वभौमसुप्रतीकाह्वयाष्टदिग्ददिन्तशुण्डा-दण्डोत्तम्भितेऽस्मिन् ब्रहाण्डे अतलवितल-सुतल-रसातल-तलातल-महातल-पातालाख्यलोकसप्तकस्योपरिभागे भुवःस्वर्महर्जनस्तपःसत्येति-लोकानामधोभागे भूर्लोके चक्रवालशैलवालभ्रमित-सुवर्णभूम्यन्तःस्थितशुद्धोदकक्षीरदधिसर्पिः सुरेक्षुलवणार्णवपरिवृतपुष्करशाकक्रौञ्च-कुशशाल्मलिप्लक्षजम्बूद्वीपसमन्विते पञ्चाशत्कोटियोजनविस्तीर्णे भूमण्डले कुवलय-कोशाभ्यन्तरकोशवत्स्थितजम्बूद्वीप-कर्णिकायितसुमेरुमुत्तरेण नीलश्वेतशृङ्गवतां रम्यकहिरण्मयोत्तरकुरुसंज्ञकवर्षमर्यादागिरीणां दक्षिणतो निषधहेमकूटहिमालयानां हरिवर्षकिंपुरुषभारतवर्षमर्यादागिरीणां पूर्वापरयोश्च गन्धमादनमाल्यवतोर्धनुर्वत्संस्थित-भद्राश्वकेतुमालमर्यादाशैलयोर्मध्ये चतुरस्रे लावृतोपशोभिते इन्द्रद्वीपकसेरुताम्रपर्णगभ-स्तिमन्नाग गन्धर्व-वारुण-भारतेति नवभेदोपलक्षिते स्वर्णप्रस्थ-चन्द्रप्रस्थ-शुक्लसूक्तिका-वर्तकमन्दर-हरिण-पाञ्चजन्य-सिंहल-लङ्केत्यष्टोपद्वीपदीपिते श्रीमद्भगवतः साक्षाद्यज्ञलिङ्गस्य विष्णोस्त्रैविक्रमे वामपादाङ्गुष्ठनखनिर्भिन्नोर्ध्वाण्डकटाहविवरेणान्तः-प्रविष्टबाह्य - जलधारायास्तच्चरण-पङ्कावनेजनारुणकिञ्जल्कोपरञ्जितायाः अखिल-जगदघमलापहोपर्स्शनायाः सुमेरुमूर्ध्न्यधिब्रह्मणश्चतुर्द्धा भिद्यमानाया विष्णुपद्या हेमकूटा-दिमार्गेण दक्षिणपयोधिं प्रविशताऽलकनन्दाख्येन स्रोतसाऽनुपूतधनुराकारनवसहस्रयोजन-विस्तीर्णे भारतखण्डे महेन्द्रमलयसह्यशक्तिमदृक्षविन्ध्यपारियात्रेति सप्तकुलपर्वतोपशोभिते चम्पकारण्य-बदरिकारण्यान्तर्गत-नैमिषारण्ये हिमवद्-विन्ध्यान्तर्भूतार्यावर्तान्तर्गत-ब्रह्मावर्तैकदेशे कर्मभूमौ लङ्कोज्जयिनीकुरुक्षेत्रादिकाया भुवो मध्यरेखायाः पूर्वदिग्भागे कुमारिकाक्षेत्रान्तर्वर्तिनि श्रीमदमुकक्षेत्रे अमुकनद्या अमुकतीरे (श्रीमदविमुक्तवाराणसीक्षेत्रे श्रीमद्विश्वेश्वरपालितराजधान्यां समस्तनन्दिभृङ्ग्यादिगणैर्महाविष्ण-वाद्यमरैर्व्यासाद्यष्टर्षिभि-र्विघ्नविनायक-दण्डपाणि-कालभैरवादिभिश्च संसेवितायां सायुज्य-सालोक्यादि-चतुर्विधमुक्तिप्रदायां श्रीमदुत्तरवाहिन्या गङ्गायाः पश्चिमतीरे) विराजमानायां सकलकल्याणसाधन भूमौ गोमयोपलिप्तप्रदेशोल्लिखितस्वस्तिकादौ चन्दनमाल्यादिना सुगन्धिद्रव्यैश्चर्चितेऽस्मिन् गृहे शुभमण्डपे देव-द्विजाग्नीनां सन्निधाने श्रीमत्क्षीरनिधि-

मध्यमध्यासितभुजङ्गपर्यङ्कशयनभगवन्नाभिसरोरुहाधिवासिनो देवतिर्यङमनुष्यादिसकलस्रष्टुः परार्द्धद्वयजीविनो ब्रह्मणो द्वितीये परार्द्धे प्रथमवर्षे प्रथममासे प्रथमपक्षे प्रथमदिवसे तद्द्वितीययामे तृतीये मुहूर्ते रथन्तरादिद्वात्रिंशतकल्पनां मध्ये श्रीश्वेतवाराहकल्पे स्वायम्भुवादिचतुर्दशमन्वन्तराणां मध्ये सप्तमे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे तत्प्रथमचरणे श्रीविष्णोबौद्धावतारे संवत्सराणामष्टशत्यधिकायां चतुःसाहस्र्यां व्यतिक्रान्तायं तदुपरि व्यतिक्रममाणे श्रीमन्नृपविक्रमार्कशतसंवत्सरान्तर्गत-शालिवाहनशके प्रवर्तमाने चान्द्रसावनसौरनाक्षत्रप्रमितबार्हस्पत्यज्यानुमानेन प्रभवादिषष्टिसंवत्सराणां मध्येऽमुकनाम्नि संवत्सरेऽमुकगोलापलम्बिनि श्रीमन्मार्तण्ड-मण्डलोदये अमुकायनगते श्रीसूर्ये अमुकऋतौ अमुकमासेमुकपक्षेऽमुकतिथावमुक-नक्षत्रेऽमुककरणेऽमुकराशिस्थे चन्द्रेऽमुकराशिस्थे सूर्येऽमुकराशिस्थे देवगुरौ शेषेषु ग्रहेषु यथा-राशिस्थानस्थितेषु एवं ग्रहगुणगण-विशेषणविशिष्टायां शुभपुण्यतिथौ अमुकगोत्रोत्पन्नोऽमकशर्माहं सहस्रावधि पूर्वजन्मान्तरेषु अस्मिन् जन्मनि च आत्मसमवेत-कायेन्द्रिय-वाङ्मनोभिः ज्ञानतोऽज्ञानतो वा कृतानां बाल्य-कौमार-यौवन-वार्धक्येषु जाग्रत्-स्वप्न-सुषुप्त्यवस्थासु मनोवाक्कायकर्मभिः काम-क्रोध-लोभ-मोह-मद-मात्सर्यैः त्वक्-चक्षु-श्रोत्र-जिह्वा-घ्राण-वाक्-पाणि-पाद-पायूपस्थैःसम्भावितानां पापानाम्, ब्रह्महनन-मद्यपान-सुवर्णस्तेय-गुरुतल्पगमन-तत्संसर्गरूपमहापातकानाम, गोहनन-स्तेयी-करण-नरेन्द्राज्ञाभङ्ग-श्रोत्रिय-विप्रादिमानभङ्ग-बुद्धिपूर्वक-बहुकालाधीताभ्यस्त-वेद-शास्त्र-विस्मरणादीनामुपपातका-नाम्, ब्राह्मण-स्त्री-बाल-पशुजातिवध-विधवास्त्रीगमन-शूद्रागमन-दासीगमन-वेश्यागमन-रजस्वलागमन-हीनवर्णागमन-सयोनिजास्त्रीगमन-शरणागतस्त्रीगमन-सगोत्रस्त्रीगमन-अगम्यागमना-दिपापानाम्, पशुयोनिबीजपात-कूटसाक्षित्व, पैशुन्यवाद-मिथ्यापवाद-म्लेच्छ-सम्भाषण-ब्रह्मद्वेषकरण-स्वामिभेदन-मित्रवञ्चन-गर्भपातन-अकाम-ब्राह्मण्यादिस्त्रीस्पर्शन-अभेद्यभेदन-अभक्ष्यभक्षण-अपेयपान-अलेह्यलेहन-अचूष्यचूषण - अनिरीक्ष्यनिरीक्षण-अवाच्यवाचन-अस्पृश्यस्पर्शन-परमर्मभेदन परवृत्तिच्छेदन-देवनिन्दा-ब्राह्मणनिन्दा-गुरुनिन्दा-मित्रनिन्दा-अतिथिनिन्दा-परिवारनिन्दा-वेदनिन्दा-शास्त्रनिन्दा-आत्मस्तुति-क्रूरकर्म-हिंसा-लुब्धक-चौर-पाषण्डिभाषण-सङ्कलीकरणमलिनीकरण-अपात्रीकरण-जातिभ्रंशकर-रसविक्रय-कन्याविक्रय-हयविक्रय-गोविक्रय-खरोष्ट्रविक्रय-दासीविक्रय-अजादिपशुविक्रय-निरर्थकार्द्रवृक्षच्छेदन-ऋणानपाकरण-ब्रह्मस्वापहरण-देवस्वापहरण-राजस्वापहरण-चिताकाष्ठधूम्रचाण्डालादिस्पर्शन-क्षुद्रकर्म-रजस्वलादिमुखास्वादन-कुग्रामवास-आसुरीकर्म-निष्ठुरभाषण-पथिताम्बूलभक्षण-दुराग्रहदुर्भाण्डदुष्प्रतिग्रहग्रहण-असाक्षिभोजन-एकाकिमिष्ठान्नभक्षण-आत्मार्थपाककरण-स्त्री-बालक-सहभोजन-यत्यन्न भोजन-यतिस्पृष्ट भोजन-यतिदापितान्नभोजन-शूद्रस्पृष्ट-शूद्रदृष्ट-शूद्रपाचितान्नभोजन-

ग्रहणकालपक्वान्नभोजन-ग्रहणसमयभोजन-पर्वकाल-रात्रिभोजन-अनिवेदितान्नभोजन-हस्तपरिविष्टान्नादिभोजन-पिशाचोद्देश्यभोजन-वटादिनिषिद्धपत्रभोजन-ग्रामयाजक-देवलक-वृषलीपतिभोजन-शाक्तपतितान्नभोजन-भिन्नकांस्यपात्रभोजन-ताम्र-अलाबु-दारुपाषाण-मृत्पात्रभोजन-क्रमुकादिपात्रभोजन-रजस्वला-चाण्डालादिवाक्यश्रवणभोजन-दग्ध-पूतिगन्धिभुक्तोच्छिष्टभोजन-गणान्नभोजन-शूद्रपात्रस्थान्नभोजन-शूद्रभुक्तशेषान्नभोजन-पंक्तिभेदन-परशय्याशयन-गृहकार्पण्यदोष-अश्रव्य-श्रवण-अहिंस्यहिंसन-अवन्द्यवन्दन-अचिन्त्यचिन्तन-अयाज्ययाजन-अपूज्यपूजन-पूज्यपूजाव्यतिक्रम-मातापितृतिरस्कार-स्त्री-पुरुष-प्रीतिभेदन-पश्वादिहिंसा-स्नान-सन्ध्या-देवपूजा-त्याग-औपासनाग्नित्याग-बलिवैश्वदेवत्याग-गुरु-लघु-स्थूल-सूक्ष्म-पापानामेतत्क्षणपर्यन्तं सञ्चितानामन्येषां च पापानां निरासपूर्वकं प्रायश्चितार्थं सहस्रगोदानजन्य-अयोध्या-मथुरा-माया-काशी-काञ्ची-अवन्तिका-पुरी-द्वारावती-सप्तपुरी-प्रयाग-पुष्कर-कुरुक्षेत्रादि-समस्ततीर्थस्नान-जन्यफलप्राप्तये समस्तपितृणाम् आत्मनश्च विश्वेश्वरादिलोकप्राप्तये आधारशक्तिमारभ्य सप्तर्षिमण्डलपर्यन्तं कृतराशेः सहस्रवर्षावच्छिन्नवर्षावसाने एकैकवालुकापकर्षणक्रमेण यावद्राशिसमाप्तिः तावत्कालपर्यन्तं श्रीविष्णोः प्रीत्यर्थं मम सकुटम्बस्य सपरिवारस्य उत्पन्नोत्पन्न-आध्यात्मिक-आधिदैविक-आधिभौतिक-त्रिविधतापनिवृत्तये सकलपापक्षयार्थ राजयक्ष्मादि-नाना-विध-वात-पित्त-कफ-जनित-व्याधिविनाशार्थं संग्रामे विवादे वैरिणा सह विग्रहे च विजयार्थम् आयुरारोग्यैश्वर्यादिविविधसम्पत्प्रवृद्धये अधीतानामध्येष्यमाणानां श्रुति-स्मृति-पुराणादिशास्त्राणां अनध्ययने अनभ्यासे च यत्कृतं पापं तज्जनितपाप-निरासार्थं च (नवोपनीतानां वेदग्रहणाधिकारसिद्धये सर्वेषामाप्यायनार्थं च इतरेषामृत्सृष्टानां वेदानां पुनर्ग्रहणार्थं च यातयामदोष-परिहारार्थं यथावद्देवतोपासनया यथावत्फलप्राप्त्यर्थम्) देव-ब्राह्मण-सवितृ-नारायण-सन्निधौगङ्गाभागीरथ्यां (नद्यन्तरेजलाशये वा) प्रवाहाभिमुखो नाभिमात्रजले (अद्यायोत्सर्गोपाकर्मनिमित्तम् स्नानविधिना गण-स्नानं) स्नानं करिष्ये।

# तुलादान विधानम्

ग्रहण व्यतिपात जन्मदिन संक्राति पुण्यकाल में तुलादान करावे। यजमान स्थिरचित होकर देव गुरु ब्राह्मण व माता पिता की आज्ञा लेकर मण्डप में पूर्वाभिमुख होकर बैठे आचम्य प्राणायाम् करे।

**अथ संकल्पः -** ॐ अद्येत्यादि॰ - सर्वारिष्ट शान्तिपूर्वकं ग्रह जनित वा अमुक महादशाऽन्तर्दशा मध्ये सर्वारिष्ट विनाशार्थं श्री महामृत्युञ्जय देवता प्रीत्यर्थम् अमुक पर्वणि अमुक काले अमुक द्रव्येण - तुला दानमहं करिष्ये।

अथवा – "एकमन्वन्तरकालावच्छिन्नप्रतिलोकपालस्थाननिवास पूर्वकार्कर्किंकिणी जालिमालिविमानाधिकरणकाप्सर: पूजासहित शिवपुरगमनपूर्वककल्पकोटिशतावच्छिन्न विष्णुपुराधिकरणनिवासकाम: सुवर्णरौप्यरत्नतुलापुरुषदानं करिष्ये," तत्रादौ निर्विघ्नतासिद्ध्यर्थं श्रीगणपत्यादीन् पूजयिष्ये इति संकल्प्य श्रीगणपत्यादीन् पूजयेत्। ततो दक्षिणोत्तरतुलां बद्धवा रक्तवस्त्रं वेष्टयित्वा तुलादण्डे चतुर्विंशतिसुवर्णमयीं प्रतिमां दक्षिणत: आरभ्य उद्गतां बद्धवा दण्डमध्यतु विष्णुप्रतिमां माषचतुष्टयनिमिताम् अग्न्युत्तरणपूर्वकं सम्पूज्य बद्धवा तत: कूटयो: सुवर्णमयं विष्णुमनन्त च फलकद्वये भूमिं च सम्पूजयेत्। तत: तोलनीयद्रव्याधिदेवताभ्यो नम: इति गन्धाक्षतै: सम्पूज्य ॐ स्तम्भसहिततुलायै नम: इति स्तम्भसहिततुलां गन्धपुष्पाक्षतमङ्गलसूत्रै: सम्पूज्य तुलाधिष्ठितदेवतापूजनं कुर्यात्, चतुर्विंशतिप्रतिमासु – उदकसंस्थां चतुर्विंशतिदेवानावाहयेत् तद्यथा – ॐ ईशानाय नम: ईशानमावाहयामि स्थापयामि।।१।। ॐ शशिने नम: शशिनमा॰ स्था॰।।२।। ॐ मरुताय नम: मरुतमा॰ स्था॰।।३।। ॐ रुद्राय नम: रुद्रमा॰ स्था॰।।४।। ॐ सूर्याय नम: सूर्यमा॰ स्था॰ नम।।५।। ॐ विश्वकर्मणे नम: विश्वकर्माणमा॰ स्था॰।।६।। ॐ गुरवे नम: गुरुमा॰ स्था॰।।७।। ॐ अङ्गिरोऽग्निभ्यो नम: अङ्गिरोग्नीना॰ स्था॰।।८।। ॐ प्रजापतये नम: प्रजापतिमाह॰।।९।। ॐ विश्वेभ्यो देवेभ्यो नम: विश्वान्देवानाहयामि॰।।१०।। ॐ धात्रे नम: धातारमा॰ स्था॰।।११।। ॐ पर्जन्यशम्भुभ्यां नम: पर्जन्यशम्भू आ॰ स्था॰।।१२।। ॐ पितृभ्यो नम: पितृना॰ स्था॰।।१३।। ॐ सौम्याय नम: सौम्यमा॰ स्था॰।।१४।। ॐ धर्माय नम: धर्ममा॰ स्था॰।।१५।। ॐ अमरराजाय नम: अमरराजमा॰ स्था॰।।१६।। ॐ अश्विभ्यां नम: अश्विनौ आ॰ स्था॰।।१७।। ॐ जलेशाय नम: जलेशमा॰ स्था॰।।१८।। ॐ मित्रावरुणाभ्यां नम: मित्रावरुणावा॰ स्था॰।।१९।। ॐ मरुद्गणेभ्यो नम: मरुद्गणानावा॰ स्था॰।।२०।। ॐ धनेशाय नम: धनेशमा॰ स्था॰।।२१।। ॐ गन्धर्वाय नम: गन्धर्वमा॰ स्था॰।।२२।। ॐ वरुणाय नम: वरुणमा॰ स्था॰।।२३।। ॐ विष्णवे नम: विष्णु मा॰ स्था॰।।२४।। इत्यावाह्य सम्पूज्य ततो यजमानो वस्त्राभरणगन्धमालाद्यलंकृत: पुष्पाञ्जलिं गृहीत्वा तुलां त्रि: प्रदक्षिणीकृत्य प्राङ्मुख उपविश्य प्रार्थयेत्। ॐ नमस्ते सर्वदेवानां शक्तिरत्वं सत्यमाश्रिता। साक्षिभूता जगद्धात्री निमिता विश्वयोनिना।। एकत: सर्वसत्यानि तथानृतशतानि च। धर्माधर्मकृतां मध्ये स्थापिताऽसि जगद्विते।। त्वं तुले सर्वभूतानां प्रमाणमिह कीर्तिता। मां तोलयन्ती संसारादुद्धरस्व नमोऽस्तु ते।। योऽसौ तत्त्वाधिपो देव: पुरुष: पञ्चविंशक:। स एषोऽधिष्ठितो देवि त्वाय तस्मान्नमो नम:।। सिद्धिरस्तु क्रियारम्भे वृद्धिरस्तु धनागमे। पुष्टिरस्तु शरीरे मे शान्तिरन्तु गृहे मम।। नमो नमस्ते गोविन्द तुलापुरुषसंज्ञक। हरे तारयसे यस्मात्तस्माच्छान्ति प्रयच्छ मे।। इति पठित्वा तुलोपरि पुष्पाञ्जलिं क्षिपेत्, पुनस्तुलां त्रि:

प्रदक्षिणीकृत्य वामहस्ते सुवर्णमयीं धर्मराजप्रतिमां दक्षिणहस्ते स्वर्णमयी सूर्यप्रतिमाम् उत्तरफलके आरोहयेत्, तत आचार्यो दक्षिणफलके तोलनीयद्रव्यमारोपयेत् - व्रीहयश्च मे यवाश्च मे माषाश्च मे तिलाश्च मे मुद्गाश्च मे खल्वाश्च मे प्रियङ्गवश्च मेऽणवश्च मे श्यामाकाश्च मे नीवाराश्च मे गोधूमाश्च मे मसूराश्च मे यज्ञेन कल्पन्ताम्। इति सप्तधान्यम्। ॐ अश्मा च मे मृत्तिका च मे गिरयश्च मे पर्वताश्च मे सिकताश्च मे वनस्पतयश्च मे हिरण्यं च मे श्यामं च मे लोहं च मे सीसं च मे त्रपु च मे यज्ञेन कल्पन्ताम्। इत्यष्टधातवः। लवणगुडसितावस्त्रादिभिर्यथा-शक्ति क्षिपेत् (वा) अभीष्टसिद्धये केवलैकद्रव्येण तुलादानं कार्यम्।

ततो यजमानः तुलामध्यदण्डस्थिदृष्टिर्हरेर्मुख पश्यन्मंत्रौ पठेत् - ॐ नमस्ते सर्वभूतानां साक्षिभूते सनातनि। पितामहे न देवि त्वं निर्मिता परमेष्ठिना। त्वया धृतं जगत्सर्वं सह स्थावरजंगमम्। सर्वभूतात्मभूतस्थे नमस्ते विश्वधारिणि।। इत्यात्माननीश्वरस्मरणपूर्वक गोदोहनकालमात्रं तोलयित्वाततस्तुलामवतीर्य तोलितद्रव्ये गन्धपुष्पाक्षतैः सह तुलसीपत्रं निक्षिप्य ब्राह्मणेभ्यो नमः सम्पूज्य कुशतिलाक्षतजलान्यादाय ॐ अद्येत्यादि ममक्षेमैश्वर्यविजयायुरारोग्यावाप्तये इमान्यात्मसमसन्तोलितसप्तधान्यादिद्रव्याणि स्वस्वर्दैवतानि - अमुकामुकगोत्रेभ्यो ब्राह्मणेभ्यो दीनानाथेभ्यश्च विभज्य दातुमहमुत्सृजे। केवलकद्रव्यविशेषेण तुलादानकरणे तु अमुकाभीष्टप्राप्तये अमुकद्रव्यमात्म-समतोलितमाचार्यायान्येभ्यो ब्राह्मणेभ्यः (इत्याद्यूहः कार्यः) ततः प्रतिष्ठा - ॐ अद्य कृतैतद्घृतसप्तधान्यादि (वा अमुकद्रव्य) तुलापुरुषदानकर्मणः प्रतिष्ठार्थ हिरण्यमग्निदैवतं (वा तन्मूल्योपकल्पितं रजतं) अमुकामुकगोत्रेभ्यो ब्राह्मणेभ्यो विभज्य दातुमहमुत्सृजे। इति प्रतिष्ठाप्य ततो यथोत्साहं भूयसीदक्षिणादानं च दत्वा जगदीश्वरं प्रणमेत् - ॐ नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च। जगद्धिताय कृष्णाय गोविन्दाय नमो नमः।। यच्चापराह्न मध्याह्ने सायाह्ने च तथा निशि। कायेन मनसा वाचा कृतं पापमजानता।। जानता वा हृषीकेश पुण्डरीकाक्ष माधव। नामत्रयोच्चारणान्मे पापं यातु सहस्रधा। यद्बाल्ये यच्च कौमारे यौवने वार्धकेऽपि वा। अन्यजन्मकृतं पापमिह जन्मकृतञ्च यत्।। तत्सर्वं नश्यतु क्षिप्रं पुण्यं भवतु चाक्षयम्।। देवता ऋषयो नागा गन्धर्वाश्चाप्सरो-गणाः।। हृष्टा पुष्टा इहागत्य शान्ति कुर्वन्तु मे सदा।। तोलितद्रव्याणि त्वरितं ब्राह्मणादिभ्यो दत्त्वा गृहाद्विसजयेत्, ततो यजमानः शरीरसन्धारितवस्त्राणि संत्यज्य शुद्धनववस्त्राणि वसित्वा हवनं कारयेत, ततः प्रमादादिति पठित्वा ब्राह्मणादीन्सम्भोज्य पश्चात् सुहृद्युक्तो भुञ्जीत।

(इति तुलादान प्रयोगः)

# अथ शास्त्रीयगोदान विधि

अथ यजमान : शुभासने प्राङ्मुख उपविश्य दानविध्युक्त-प्रकारेण आचमनादिसर्वविधिं विधाय स्वस्त्ययनञ्च पठित्वा सङ्कल्पं कु॰ - ओं अद्येत्यादि ममात्मना सह एकविंशतिपुरुषोत्तारणपूर्वकं श्रीपरमेश्वरप्रीतिकामो गोदानं करिष्ये। तदङ्ग ब्राह्मणवरण तत्पूजनं गोपूजनञ्च करिष्ये। तत्रादौ निर्विघ्नतासिद्ध्यर्थं श्रीगणपत्यादीन् पूजयिष्ये इति सङ्कल्प्य, यथालब्धोपचारैः श्रीगणपत्यादीन्पूजयित्वा सपत्नीकब्राह्मणवरणं पूजनञ्च कुर्यात्ततो सुशीलादिलक्षणोपेतामव्यङ्गाङ्गी गां प्रोक्षयेत् – ॐ इरावती धेनुमती हि भूत ठं॰ सूयवासिनी मनवेदसश्या। व्यस्कभ्नारोदसी विष्णवे तेदाधार्थ पृथिवीमभितो मयूखैः। इति सम्प्रोक्ष्य आवाहनम् – ॐ आवाहयाम्यहं देवी गां त्वां त्रैलोक्यमातरम्। यस्याः स्मरणमात्रेण सर्वपापप्रणाशनम्।।

तद्यथा – शृङ्गमूलयोः ब्रह्मविष्णुभ्यां नमः ब्रह्मविष्णु आवाहयामि।।१।। शृङ्गाग्रे सर्वतीर्थेभ्यो नमः सर्वतीर्थानावाहयामि।।२।। शिरोमध्ये महादेवाय नमः महादेवमावा॰ ।।३।। ललाटाग्रे गौर्य्यै नमः गौरीमावा॰ ।।४।। नासावंशे षण्मुखाय नमः षण्मुखमावा॰ ।।५।। कर्णयोः अश्विभ्यां नमः अश्विनौ आवा॰।।६।। नेत्रयोः शशिभास्कराभ्यां नमः शशिभास्करौ आवा॰।।७।। दन्तेषु सर्ववायवे नमः वायुमावा॰।।८।। जिह्वायां वरुणाय नमः वरुणमावा॰।।९।। हुँकारे सरस्वत्यै नमः सरस्वतीमावा॰।।१०।। गण्डयोः मासपक्षाभ्यां नमः मासपक्षौ आवा॰।।११।। ओष्ठयोःसन्ध्याद्वयाय नमः सन्ध्याद्वयम् आवा॰।।१२।। ग्रीवायाम् इन्द्राय नमः इन्द्रमावा॰।।१३।। उरसि साध्येभ्यो नमः साध्यानावा॰।।१४।। जंघयोः धर्माय नमः धर्ममावा॰।।१५।। खुरमध्ये गन्धर्वेभ्यो नमः गन्धर्वमावा॰।।१६।। खुराग्रेषु पन्नगेभ्यो नमः पन्नगमावा॰।।१७।। खुरमध्ये अप्सरोगणेभ्यो नमः अप्सरोगणानावा॰।।१८।। पृष्ठ एकादशरुद्रेभ्यो नमः एकादशरुद्रानावा॰।।१९।। सर्वसन्धिषुवसुभ्यो नमः वसूनावा॰।।२०।। श्रोणीतटे पितृभ्यो नमः पितृनावा॰।।२१।। पुच्छे सोमाय नमः सोममावा॰।।२२।। अधोगात्रेषु द्वादशादित्येभ्यो नमः द्वादशादित्यानावा॰।।२३।। केशेषु सूर्यरश्मिभ्यो नमः सूर्यरश्मीनावा॰।।२४।। गोमूत्रे गङ्गायै नमः गङ्गामावा॰।।२५।। गोमये यमुनायै नमः यमुनामावा॰।।२६।। क्षीरे सरस्वत्यै नमः सरस्वतीमावा॰।।२७।। दध्नि नर्मदायै नमः नर्मदामावा॰।।२८।। घृते वह्नये नमः वह्निमावा॰।।२९।। रोमसु त्रयस्त्रिंशत्कोटिदेवेभ्यो नमः त्रयस्त्रिंशत्कोटिदेवानावा॰।।३०।। उदरे पृथिव्यै नमः पृथिवीमावा॰।।३१।। स्तनेषु चतुर्भ्यः सागरेभ्यो नमः चतुरः सागरानावा॰।।३२।। सर्वशरीरे कामधेनवे नमः कामधेनुमावा॰।।३३।। इत्यावाह्य पूजयेत्।।

**पाद्यम् –** सौरभेयि सर्वहिते पवित्रे पापनाशिनि। प्रतिगृह्ण मया दत्तं पाद्यं त्रैलौक्यवन्दिते।

**अर्घ्यम् –** देहस्थाया च रुद्राण्याः शङ्करस्य सदा प्रिये। धेनुरूपेण सा देवी मम पापं व्यपोहतु।।

**आचमनीयम् –** या लक्ष्मीः सर्वभूतेषु या च देवेष्ववस्थिता। धेनुरूपेण सा देवी मम पापं व्यपोहतु।।

**स्नानम् –** सर्वदेवमये मातः सर्वदेवनमस्कृते । तोयमेतत्सुखस्पर्शं स्नानार्थं गृह्ण धेनुके।। इति स्नानार्थमभ्युक्ष्य।

**वस्त्रम् –** आच्छादनं गवे दद्यात्सम्यक् शुद्धं सुशोभनम्। सुरभिर्वस्त्रदानेन प्रीयतां परमेश्वरि।।

**रक्तचन्दनम् –** सर्वदेवप्रियं देवि चन्दनं चन्द्रसन्निभम्। कस्तूरीकुङ्कुमाढ्यञ्च प्रीत्यर्थं प्रतिगृह्यताम्।। अक्षतान् तिलजान् देवि शुभ्रचन्दनमिश्रितान्। गृहाण परमप्रीत्या गोस्त्वं त्रिदिवपूजिते।। शृङ्गभूषार्थं स्वर्णशृङ्गम्। चरणभूषणार्थं घण्टाम्। दोहनार्थं कांस्यपात्रम्। सर्वालंकारार्थं यथाशक्तिद्रव्यम्।

**पुष्पमाला –** पुष्पमालां तथा जातिपाटलाचम्पकानि च। पुष्पाणि गृह्ण धेनो त्वं सर्वविघ्नप्रणाशिनि।। इति मालां बध्नीयात्।

**धूपम् –** देवद्रुमरसोद्भूतं गोघृतेन समन्वितम्। प्रयच्छामि महाभागे धूपोऽयं प्रतिगृह्यताम्।।

**दीपम् –** आनन्ददः सुराणाञ्च लोकानां सर्वदा प्रियः। गौस्त्वं पाहि जगन्मातः दीपोऽयं प्रतिगृह्यताम्।

**नैवेद्यम् –** सुरभिर्वैष्णवी माता नित्यं विष्णुपदे स्थिता। ग्रासं गृह्णातु सा धेनुर्याऽस्तु त्रैलोक्यवासिनी।।

**इत्याहारं निवेद्य पुष्पाञ्जलिं दद्यात् –** ॐ गोभ्यो यज्ञाः प्रवर्तन्ते गोभ्यो देवाः समुत्थिताः। गोभ्यो वेदाः समुत्कीर्णाः षडङ्गपादसक्रमाः। ॐ अनेन पूजनेन गोदेवता प्रीयताम्। ततो गोपुच्छतर्पणम् – सव्यं भूत्वा पूर्वमुखो यवाम्बुकुशान्वितं गोपुच्छं दक्षकरे निधाय पुच्छस्याधः प्रदेशे जलभाजनं स्थापयित्वा तर्पयेत् –

ॐ ब्रह्मा तृप्यतु, ॐ विष्णुस्तृप्यतु, ॐ रुद्रस्तृप्यतु, ॐ मनवस्तृप्यन्तु, ॐ ऋषयस्तृप्यन्तु, ॐ रुद्रातिपुत्रास्तृप्यन्तु, ॐ साध्यास्तृप्यन्तु, ॐ मरुद्गणास्तृप्यन्तु, ग्रहास्तृप्यन्तु, ॐ नक्षत्राणितृप्यन्तु, ॐ योगास्तृप्यन्तु, ॐ राशयस्तृप्यन्तु, ॐ वसुधा तृप्यतु, ॐ अश्विनौ तृप्येताम्, ॐ यक्षास्तृप्यन्तु, ॐ रक्षांसि तृप्यन्तु, ॐ मातरस्तृप्यन्तु, ॐ रुद्राणि तृप्यन्तु, ॐ पिशाचास्तृप्यन्तु, ॐ सुपर्णास्तृप्यन्तु, ॐ पशवस्तृप्यन्तु, ॐ दानवास्तृप्यन्तु, ॐ योगिनस्तृप्यन्तु, ॐ विद्याधरास्तृप्यन्तु, ॐ ओषधयस्तृप्यन्तु, ॐ दिग्गजास्तृप्यन्तु, ॐ यक्षास्तृप्यन्तु, ॐ देवपत्न्यस्तृप्यन्तु, ॐ लोकपालास्तृप्यन्तु, ॐ नारदस्तृप्यतु, ॐ जन्तवस्तृप्यन्तु, ॐ स्थावरास्तृप्यन्तु, ॐ जङ्गमास्तृप्यन्तु,

(कण्ठी कृत्वा) ॐ सनकस्तृप्यतु, ॐ सनन्दनस्तृप्यतु, ॐ कपिलस्तृप्यतु, ॐ आसुरितृप्यतु, ॐ वोढुस्तृप्यतु, ॐ पञ्चशिखस्तृप्यतु, (अपसव्यम्) ॐ कव्यवाड् तृप्यतु, ॐ अनलस्तृप्यतु, ॐ सोमस्तृप्यतु, ॐ यमस्तृप्यतु, ॐ अर्यमातृप्यतु, ॐ अग्निष्वातास्तृप्यन्तु, ॐ बर्हिषदस्तृप्यन्तु, ॐ सोमपाः पितरः तृप्यन्तु, ॐ यमस्तृप्यतु, ॐ धर्नराजस्तृप्यतु, ॐ मृत्युस्तृप्यतु, ॐ अन्तकस्तृप्यतु, ॐ वैवस्वतस्तृप्यतु, ॐ कालस्तृप्यतु, ॐ सर्वभूतक्षयकरस्तृप्यतु, ॐ औदुम्बरस्तृप्यतु, ॐ दघ्नस्तृप्यतु, ॐ नीलस्तृप्यतु, ॐ परमेष्ठिनस्तृप्यन्तु, ॐ वृकोदरस्तृप्यतु, ॐ चित्रस्तृप्यतु, ॐ चित्रगुप्तस्तृप्यतु।

ॐ मातृपक्षाश्च ये केचिद्ये केचित्पितृपक्षकाः। गुरुश्वशुरबन्धूनां ये कुलेषु समुद्भवाः।। ये मे कुले लुप्तपिण्डा पुत्रदारविवर्जिताः। क्रियालोपगता ये च जात्यन्धाः पङ्गवस्तथा।। विरूपा आमगर्भाश्च ज्ञाताज्ञातकुले मम। ते सर्वे तृप्तिमायान्तु गोपुच्छोकदतर्पणः।। वृक्षयोनिगता ये च पर्वतत्वं गताश्च ये पशुयोनिगता ये च ये च कीटपतङ्गकाः। ते सर्वे तृप्तिमायान्तु गोपुच्छोदकतर्पणैः।। नरके रौरवे ये च महारौरवसंस्थिताः। असिपत्रवने घोरे कुम्भीपाकस्थिताश्च ये।। ते सर्व॰ स्वार्थबद्धा मृता ये च शस्त्रघातमृवाश्च ये। ब्रह्माहस्तमृता ये च नारीहस्तमृताश्च ये।। ते सर्वे॰ ।। पाशमध्ये मृता ये च स्वल्पमृत्युवशंगताः। सर्वे च मानवा नागाः पशवः पक्षिणस्तथा। ते सर्वे॰ ।। आब्रह्मस्तम्बपर्य्यन्तं देवर्षिपितृमानवा। तृप्यन्तु सर्वदा सर्वे गोपुच्छोदकतर्पणैः।।

ततो रज्जवादिनिर्मुक्तां सवत्सां गां प्राङमुखीमवस्थाप्य दाता पुच्छदेशे प्राङ्मुखस्तिष्ठेत्, पात्रभूतो विप्रस्तत्रैव दक्षिणत उद्ङ्मुखस्तिर्ष्ठेत् (पात्र भूतो विप्रस्तत्रैव उद्ङ्गमुखस्तिष्ठेत्) दाता ससुवर्णकुशाक्षतजलं नीत्वा सङ्कल्पं कुर्यात् –

**अथ गोदाने बृहत्सङ्कल्पः –** ॐ इह पृथिव्यां जम्बूद्वीपे भारतवर्षे कुमारिकाखण्डे आर्यावर्तैकदेशे अमुकक्षेत्रे श्रीभागीरथ्याः अमुकदिग्विभागे इत्यादिदेशं समनुकीर्त्य ॐ ब्रह्मणोऽह्नि द्वितीये परार्द्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमस्य कलियुगस्य प्रथमचरणे बौद्धावतारेऽमुकनाम्नि संवत्सरेऽयने ऋतौ मासे पक्षे तिथौ वारे नक्षत्रे योगेऽमुकराशिस्थिते चन्द्रेऽमुकराशिस्थिते सवितरि अमुकराशिस्थिते देवगुरौ शेषेषु ग्रहेषु यथा – यथा स्थानस्थितेषु सत्सु एवं गुणविशिष्टे देशे काले च अमुकगोत्रोऽमुकोऽहं मम श्रतिस्मृतिपुराणेतिहासोक्तफलावाप्तये ज्ञाताऽऽज्ञातानेक–जन्मार्जितमनोवाक्काय–कर्मजन्यपापापनुत्तये निखिलदुःखदौर्भाग्यदुःस्वप्नदुनिमित्त–दुष्टग्रहबाधाशान्तपूर्वकं धनधान्यायुरारोग्यद्विपदचतुष्पदसन्ततिचतुर्वर्गादिनिखिल–वाच्छितसिद्धये गोरोमसंख्यक–दिव्यवत्सरावच्छिन्नस्वर्गलोकस्थितिकामश्च पितृणां निरतिशयानन्दब्रह्मलोकावाप्तये च

श्रीपरमेश्वरप्रीतये इमां सुपूजितां सालङ्कारां सवत्सां गां रुद्रदैवताममुकगोत्रायाऽमुकशर्म्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे। ब्राह्मणहस्तोपरि कुशाक्षतजलं दत्वा – द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णातु, इत्यनेन विधिना गृह्णीयात्, ब्राह्मणः कोदात्० इति पठेत्, ततः प्रतिष्ठा–अद्य कृतैदद्गोदानकर्मण साङ्गतासिद्धये इदं सतुलसीदलं हिरण्यम् अग्निदैवतम् अमुकगोत्राय०। यजमानः प्रार्थनां कुर्यात् – ॐ यज्ञसाधनभूता या विश्वपापौघनाशिनी। विश्वरूपधरो देवः प्रीयतामनया गवा।।
ततो वान्धवैः सह यजमानो विप्र–सवत्सगोप्रदक्षिणा चतुष्टयं कुर्यात् ॐ यानि कानि च पापानि जन्मान्तर कृतानि च। तानि नाशय धेनो त्वं प्रदक्षिणपदे पदेः।। इति चतुःसंख्यकपरिक्रमणं विधाय करौ बद्धवा प्रणमेत् – ॐ गावोममाग्रतः सन्तु गावो मे सन्तु पृष्ठतः। गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम्।। नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च। नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः।। गावः स्वर्गस्य सोपानं गावो धन्याः सवाहनाः। सर्व देवास्तनौ यस्याः सा धेनुर्वरदाऽस्तु मे ततो गोकर्णे जपेत् – ॐ ह्रीं नमो भगवत्यै ब्रह्ममात्रे विष्णुभगिन्यै रुद्रदेवतायै सर्वपापप्रमोचिन्यै। ततो ब्राह्मणो गोपुच्छान्वितजलेन यजमानशिरसि निषिच्य तिलकाशीर्वादादीनि दद्यात्, गाञ्च विसर्ज्य किञ्चिदनुब्रजेत्। गोपुच्छोदकम् अश्वत्थमूले सरसि वा क्षिपेत्।। इति शास्त्रीयगोदान विधिः।।

## ।।अथ कार्तवीर्याजुन अनुष्ठान प्रयोगः।।

आचम्यप्राणानायम्य देशकालौ स्मृत्वा मम श्रीकार्तवीर्यार्जुनदेवताप्रीतिद्वार क्षिप्रममुकशर्मणो बुद्धिहरणपूर्वकस्वधनप्राप्तये मनोभिलषितकार्यसिद्ध्यर्थं वा कार्तवीर्यसिद्ध्यर्थं दीपदानपूर्वकं ॐ ह्रीं कार्तवीर्य इति श्लोकरूपमन्त्रस्य पंचशतसंख्याकजपं तदन्ते "कार्तवीर्यः खलद्वेषी" इति द्वादशसंख्याकान् पाठानद्यारभ्य यथाकालपर्यन्तं ब्राह्मणद्वारा कारयिष्ये। इति सङ्कल्प गणेशपूजनं कुर्यात्।
कार्तवीर्यार्जुनोनामेतिश्लोकरूपमन्त्रजपार्थं कार्तवीर्यार्जुनस्तोत्रपाठार्थं चैभिः पुष्पाञ्जली पुगीफलद्रव्यैरमुकगोत्रममुकशर्माणं ब्राह्मणं त्वामहं वृणे। वृतोऽस्मि। यथाविहितं जपं पाठं च कुरु। यथाज्ञानं करवाणि। ब्राह्मणः आचम्य प्राणानायम्य यथा देशकालौ० अमुकगोत्रोऽमुकशर्मा अमुकगोत्रस्यामुकशर्मणे यजमानस्य कृतसकल्पसिद्ध्यर्थं कार्तवीर्यार्जुनदीपदानं मन्त्रजपं पाठं च करिष्ये। गोमयोपलिप्तायां भूमौ ताम्रपात्रे वा रक्तचन्दनैः षटकोणं कृत्वा तन्मध्ये ॐ फ्रौंबीजं लिखित्वा तदुपरि ताम्रमयदीपपात्र

निधाय ततो दीपवति पात्रे संस्थाप्य अनेन शुद्धिगव्येन पूरयामि जगत्पते। कार्तवीर्य महावीर्य कार्यं सिद्ध्यतु मे हि तत्।। इत्यनेन घृतपूर्णं कृत्वा दीपपात्रादक्षिणभागेऽधोग्रां दक्षिणाधारां छुरिकां "ॐ नमः सुदर्शनास्त्राय फट्" इति मन्त्रेण निखनेत्।। कार्तवीर्य नृपाधीश योगज्वलितविग्रह।। भव सन्निहितो देव ज्वालारूपेण वर्तिषु।। इतिमन्त्रेण पश्चिमाभिमुखं दीपं प्रज्वाल्य ततो दीपस्य प्राणप्रतिष्ठां कृत्वा श्रीकार्तवीर्याजुनदीपदेवतायै नमः इति चन्दनपुष्पादिभिः सम्पूज्य दीपमन्त्रं संकल्प्य, कार्तवीर्यमहाबाहो भक्तानाभयङ्कर। दीपं गृहाण मद्दत्त कल्याणं कुरु सर्वदा।। अनेन दीपदानेन यजमानाभीष्ट प्रयच्छतु। ततो दीपाग्रे सहस्त्र जपः कार्यः।

अस्य श्रीकार्तवीर्यार्जुनस्तोत्रमन्त्रस्य दत्तात्रेय ऋषिः अनुष्टुप्छन्दः श्रीकार्तवीर्यार्जुनो देवता, फ्रौं बीजं ह्रीं शक्तिः क्लीं कीलकं यजमानाभीष्टसिद्ध्यर्थे जपे विनियोगः। कार्तवीर्यार्जुनाय नमः हृदयाय नमः कार्त॰ शिरसेस्वाहा कार्त॰ शिखायै वषट् ।। कार्त॰ कवचाय हुम् कार्त॰ नेत्रत्रयाय वौषट्। कार्त॰ अस्त्राय फट् । इतिषडङ्गन्यासः।

**ध्यानम् -** सहस्त्रबाहुं सशरं सचापं रक्ताम्बरं रक्तकिरीटकुण्डलम्। चौरादिदुष्ट-रिपुनाशनमिष्टदं तं ध्यायेन्महावलविजृम्भितकार्तवीर्यम्।। इति ध्यानम्।।

ॐ ह्रीं कार्तवीर्यार्जुनो नाम राजाबाहुसहस्त्रवान्। तस्य स्मरणमात्रेण हृतं नष्टं च लभ्यते। इति जपः कार्यः।।

जपान्ते पुनर्न्यासं कृत्वा जपं निवेदयेत्।

**अथ पाठ -** कार्तवीर्यः खलद्वेषी कृतवीर्यसुतो बली। सहस्त्रबाहुः शत्रुघ्नो रक्तवासा धनुर्धरः।।१।।
रक्तगन्धो रक्तमाल्यो राजास्मर्तुरभीष्टदः। द्वादशैतानि नामानि कार्तवीर्यस्य यः पठेत्।।२।।
सम्पदस्तस्य जायन्ते जनाः सर्वे वशं गताः। राजानो दासतां यान्ति रिपवो वश्यतां तथा।।३।।
आनयत्याशु दूरस्थं क्षेमलाभयुतं प्रियं। सर्वसिद्धिकरं स्तोत्रं जप्तृणां सर्वकामदम्।।४।।
कार्तवीर्य महावीर्य सर्वशत्रुविनाशन। सर्वत्र सर्वदा तिष्ठ दुष्टान्नाशय पाहि माम्।।५।।
उत्तिष्ठ दुष्टदमन सप्तद्वीपकपालक। त्वामेव शरणं प्राप्त सर्वतो रक्ष रक्ष माम्।।६।।
दुष्टघ्न किं त्वं स्वपिपि किं तिष्ठसि चिरायसि। पाहि नः सर्वदा सर्वभयेभ्यः स्वसुतानिव।।७।।
मतिभङ्गः स्वरो हीनः शत्रुणां मुखभञ्जनम्। रिपूणां च सभामध्ये सर्वत्र विजयं कुरु।।८।।
यस्य स्मरण मात्रेण सर्वदुःखक्षयो भवेत्। तं नमामि महावीरमर्जुनं कृतवीर्यजम्।।९।।
हैहयाधिपतेः स्तोत्रं सहस्त्रावृत्तिकं कृतम्। वाञ्छिछतार्थप्रदं नृणां जपं सम्यक् जपेत यदि।।१०।।

"प्रणम्य क्षमस्व" इति विसर्जयेत्। प्रतिदिनमेव जपसमाप्तिः कार्यः।

शुभदिने समाप्य ब्राह्मणं सम्पूज्य दक्षिणां दत्त्वा भोजनम् कर्मेश्वरार्पणं कुर्यात्।।

इति कार्तवीर्याजुनप्रयोगः।।

# अथायुष्याभिवृद्धये जन्मोत्सवविधिः

जन्मदिने पुत्रकलत्रसहितो यजमानो ब्राह्मे मुहूर्ते उत्थाय तिलतण्डुलचूर्णमिश्रितगङ्गोदकेन स्नात्वा सन्ध्यादिनित्यक्रियां कुर्यात्। ततः सामग्रीं सम्पाद्याहते वाससी भूषणानि च धृत्वा गृहान्तः शुभासने प्राङ्मुख उपविश्य स्वदक्षिणतः पत्नीं तस्या दक्षिणतो बालं चोपवेश्य धृतपवित्रपाणिराचान्तः प्राणायामं विधाय ॐ अद्य॰ अस्य शिशोः (मम वा) दीर्घायुः श्रीतेजोवृद्धिद्वारा श्रीजगदीश्वरप्रीत्यर्थमद्य दिने वर्धापनाख्यं कर्म करिष्ये। इति संकल्प्य निर्विघ्नतार्थं श्रीगणपत्यादिपूजनं कुर्यात्। ततो यज्ञीयकाष्ठपीठे पंक्तिरूपेण स्थापितेष्वेकविंशत्यक्षतपुञ्जेषु निम्ना देवता आवाहयेत्। तद्यथा – ॐ गणपतये नमः श्रीगणपतिमावाहयामि १, (एवं सर्वत्र) ॐ कुलदेव्यै नमः कुल॰ २, ॐ प्रजापतये नमः प्र॰ ३, ॐ विष्णवे नमः वि॰ ४, ॐ महेश्वराय नमः म॰ ५, ॐ इष्ट देवतायै नमः इष्ट॰ ६, ॐ सूर्याय नमः सू॰ ७, ॐ जन्मर्क्षाय नमः ज॰ ८, ॐ षष्ठीदेव्यै नमः ष॰ ९, ॐ मार्कण्डेयाय नमः मा॰ १०, ॐ अश्वत्थाम्ने नमः अश्व॰ ११, ॐ बलये नमः बलि॰ १२, ॐ व्यासाय नम॰ व्या॰ १३, ॐ विभीषणाय नमः वि॰ १४, ॐ कृपाचार्य्याय नमः कृ॰ १५, ॐ परशुरामाय नमः प॰ १६, ॐ बलभद्राय नमः ब॰ १७, ॐ हनुमते नमः ह॰ १८, ॐ स्थानदेवतायै नमः स्था॰ १९, ॐ वास्तुदेवतायै नमः वा॰ २०, श्री श्रेत्रपालाय नमः क्षे॰ २१, इत्यावाह्य ॐ एतन्तेति प्रतिष्ठाय। ॐ आवो देवा स ईमहे यामं प्रयत्यध्वरे। आवो देवा स आशिषो यज्ञियासो हवामहे, ॐ भूर्भुवः स्वः श्रीगणपत्याद्यावाहितदेवताभ्यो नमः आवाहनं समर्पयामि, एवं प्रतिवाक्यान्ते आसनं समर्पयामित्यादि पठित्वा गन्धाक्षतपुष्पधूपादिना पृथक् पृथगेकतन्त्रेण वा पूजनं विधाय षष्ठ्यै दधिभक्तनैवेद्यं निवेद्य पूजनान्ते प्रार्थयेत् – ॐ जय देवि जगन्मातर्जगदानन्दकारिणि। प्रसीद मम कल्याणि महाषष्ठि नमोस्तु ते।। मार्कण्डेयाय मुनये नमस्ते महदायुषे। चिरञ्जीवी यथा त्वं भो भविष्यामि तथा मुने।। रूपवान् वित्तवानायुःश्रिया युक्तं च मां कुरु (शिशुं कुरु)।। चिरञ्जीवी यथा त्वं भो मुनीनां प्रवरो द्विज ! कुरुष्व मुनिशार्दूल ! "तथा मां चिरजीविनम्" (बालं मे चिरजीविनम्)।।

त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च।। ब्रह्मविष्णुशिवैः सार्द्धं रक्षां कुर्वन्तु तानि मे।। ॐ अश्वत्थामा बलिर्व्यासो हनूमांश्च बिभीषणः। कृपः परशुरामश्च सप्तैते चिरजीविनः।। सप्तैतांश्च स्मरेन्नित्यं मार्कण्डेयमथाष्टमम्। जीवेद्वर्षशतं साग्रमपमृत्युविवजितः।। प्रीयन्तां देवताः सर्वाः पूजां गृह्णतु तां मम। प्रयच्छन्त्वा युरारोग्यं यशः सौख्यञ्च सर्वदा।। मन्त्रन्यूनं क्रियान्यूनं द्रव्यन्यूनं महामुने ! यदर्चितं मया देव परिपूर्ण तदस्तु मे।। ततः पायसेन 'सर्वेभ्यो भूतेभ्यो नमः' इति बलिं दद्यात्। तदनुग्रहनिमित्तकदानानि कुर्यात्। ततस्तिलगुडमिश्रितं पयः पिबेत्। तत्र मन्त्रः – ॐ सगुडं तिलसम्मिश्रमञ्जल्यर्धमितं

पयः। मार्कण्डेयाद्वरं लब्ध्वा पिवाम्यायुर्विवृद्धये।। ततो मातापितृगुर्वाचार्यादीन् प्रणम्याशीर्वादं श्रीगुरुद्वारा गृह्णीयात्। ततो वर्षफलं ज्योतिर्विदः सकाशाच्छ्रुत्वा तं दक्षिणावस्त्रादिभिः सन्तोषयेत्। अन्न-कचित्पूजितदेवतानां नाममन्त्रेण प्रत्येकमष्टविंशतिसंख्यं तिलहोमश्चोक्तः। ततो विप्रभोजनम्।। इति जन्मदिनोत्सवविधिः।।

# अथ विष्णुप्रतिमा विवाह विधिः

अथ कन्यापिता विवाहात्पूर्वं चन्द्रतारानुकूले शुभे दिने स्नात्वा नित्यकर्मं समाप्य नवमहतं वासः परिधाय स्वासने प्राङ्मुखः समुपविश्य स्वदक्षिणतः कन्यां समुपवेश्य दीपं प्रज्वाल्य आचम्य प्राणानायम्य स्वस्तिवाचनशान्तिपाठादिकं कृत्वा सुमुखश्चेत्यादि गणेशादिस्मरणानन्तरं सङ्कल्पं कुर्य्यात्। अद्येह ममामुकराशेरस्याः कन्याया जन्मसामयिकलग्नात अमुकामुकस्थान-स्थितामुकग्रहैः संसूचितः बालवैधव्यादि-दोष-नानाविधवन्ध्या-काकवन्ध्या-दुर्भगा-मृतापत्या-दुःशीला स्वैरिणी-वैरिणी-दुश्चारिणी-कुलटा-धूर्तादि-दोषनिराकरणपूर्वक सौभाग्यप्राप्तिद्वारा आयुरारोग्यैश्वर्य्याभि-वृद्धिपूर्वकदाम्पत्यैश्वर्य्य सुखावाप्तये श्रीपरमेश्वरप्रीतये च विष्णुप्रतिमया कन्योद्वाहकर्माहं करिष्ये तत्पूर्वाङ्गत्वेन कलशस्थापनपुण्याहवाचन-नीराजन-मातृकापूजनवसोर्धारा-निपातनायुष्यमन्त्रजपाभ्युदयिकनान्दीश्राद्धादीनि करिष्ये। तत्रादौ निर्विघ्नतासिद्धये श्रीभगवतो गणेश्वरस्य पूजनं करिष्ये। इति सङ्कल्प्य गणपत्यादिपूजनं कृत्वा आचार्यं सम्पूज्य एभिर्गन्धादिभिः विष्णुप्रतिमाप्रतिग्रहार्थ त्वामहं वृणे इति वरणं कृत्वा प्रार्थयेत्। उद्वाहयिष्ये विधिवदच्युतेन मनोहराम्। कन्यां सौभाग्यसौख्यार्थहेतवेऽह द्विजोत्तम।। इति सम्प्रार्थ्य सुवर्णनिर्मितां चतुर्भुजां शंखाद्यायुधसहितां विष्णु-प्रतिमां अग्न्युत्तरणपूर्वकं पञ्चामृतेन संस्नाप्य तण्डुलपूर्णपात्रे संस्थाप्य - ॐ एतं ते देवसवितर्यज्ञं प्राहुर्बृहस्पतये ब्रह्मणे तेन यज्ञमवतेन यज्ञपतिं तेन मामव। ॐ मनोजूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञ ठं॰ समिमं दधातु विश्वे देवास इह मादयन्तामों ३ प्रतिष्ठ। ॐ भूर्भुवः स्वः सुवर्णप्रतिमायां श्रीविष्णो इहागच्छेह तिष्ठेह सुप्रतिष्ठितो वरदो भव। इति प्राणप्रतिष्ठां विधाय कन्याया मङ्गलस्नानं कारयित्वा कंकणबन्धननूतनवस्त्रभूषणादिभिः कन्यामलंकृत्य विष्णुप्रतिमासमीपे समानीय तस्या हस्तेन पूजनसङ्कल्पं कारयेत्। तद्यथा अद्यह अमुकगोत्राया अमुकनामधेयाया मम जन्म सामयिक लग्नात अमुकामुक स्थानस्थितामुकामुकग्रहैः संसूचितवालवैधव्यदोषनिराकरण-पूर्वकसौभाग्यसमृद्धिद्वारा भविष्यद्भर्तुरारोग्यैश्वर्य्याभिवृद्धिकामा श्रीपरमेश्वरप्रीत्यर्थं च सुवर्णप्रतिमायां श्रीविष्णोः पूजनं करिष्ये। इति संकल्प्यनिर्मितां रुचिरां शंखगदाचक्राब्ज-शोभिताम्। दद्यातां वाससी पीते कुमुदोत्पलमालिनीम्। इति ध्यात्वा पाद्यादीनि समर्पयामि विष्णवे नमः इति यथोपचारैः विष्णु सम्पूज्य पुष्पाञ्जलिं गृहीत्वा प्रार्थयेत्। देहि विष्णो वरं

देव कन्यां पालय दुःखतः। पति जीवय कन्यायाश्चिरं पुत्रसुखं कुरु।। इति सम्प्रार्थ्य मधुपर्केण अर्चयित्वा वस्त्रालंकार-पुष्पमालादिकं समर्प्य कन्याविष्णुप्रतिमान्तरालेऽन्तःपटं धृत्वा कन्यावस्त्रपरिधानानन्तरं अन्तःपटमपसार्य समञ्जनान्ते विवाहोपयोगिमङ्गलश्लोकपाठं कारयित्वा कन्यापिता कन्यादानसंकल्पं कुर्यात्। ॐ विष्णुः २ इत्यादि अद्यह अमुकोऽहम अमुकराशेरमुकनामद्येयाया ममास्याः कन्याया जन्मसामयिक - लग्नात् अमुकामुकस्थानस्थितामुकामुकग्रहैः संसूचितवैधव्यादिदोषनिराकरणपूर्वक-सौभाग्यसिद्धिद्वारा एतद्भविष्यद्भर्तुंरायुरा-रोग्यैश्वर्यवृद्धिकामः अमुकगोत्र। अमुकप्रवरां अमुकनाम्नीं श्रीरूपिणीं इमां कन्यां विष्णवे तुभ्यं समर्पयामि। इति संकल्प्य (तदुत्तरं अंचलग्रन्थि बन्धनादि सर्वं विवाहविधिवत् कृत्वा) 'परित्वा' इत्यर्कविवाहस्थित-दशमिर्मन्त्रैरधस्तादुपरिष्टाश्च मन्त्रावृत्या-कन्यां प्रतिमां च दशतन्तुसूत्रेण परिवेष्टयेत्। ततः किंचित् स्थित्वा प्रतिमां निःसार्य - अद्य वैधव्यदोषनिवृत्तये कृतैतद्विष्णुप्रतिमा-विवाहकर्मणः साङ्गतासिद्ध्यर्थं साद्गुण्यार्थं श्रीपरमेश्वरप्रीत्यर्थं च इमां दक्षिणां विष्णवे तुभ्यं सम्प्रददे इति समर्पयेत्। ततो विष्णुप्रतिमामाचार्याय समर्पयेत्। तत्र संकल्पः - अद्येह अमुकगोत्रामुकराशिरमुकनामद्येयाह मम जन्मसामयिकलग्नात् अमुकामुक-स्थानस्थितामुकामुकामुकग्रहैः संसूचितवैधव्यादिनानादोषनाशनपूर्वकभविष्यन्मद्भर्तु-शरीरारोग्यायुर्वृद्धिकामा इमां सुपूजितां विष्णुप्रतिमां अग्निदैवतां अमुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे। ॐ तत्सत् इति संकल्प्य प्रार्थनावाक्यानि पठेत् -

यन्मया पूर्वजनुषि घ्नन्त्या पतिमनागसम्। विषोपविषशस्त्रद्यैर्हतो वातिविरक्तया।।१।।
प्राप्यमाणं महाघोरं यशःसौख्यधनापहम्। वैधव्याद्यतिदुःखौघनाशाय सुखलब्धये।।२।।
बहुसौभाग्यलब्ध्यै च महाविष्णोरिमां तनुम्। सौवर्णीं निर्मितां शक्तया तुभ्यं संप्रददे द्विज।।३।।

इति पठित्वा द्विजकरे सोपकरणं विष्णुप्रतिमां दत्त्वा अनघाऽहमस्मीति त्रिवारं वदेत्। ब्राह्मणश्च - ॐ द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णातु - ॐ स्वस्तीति प्रतिगृह्य ॐ कोऽदात्कस्मा अदात् कामोऽदात्। कामो दाता कामः प्रतिग्रहीता कामैतत्ते । इति पठित्वा अनघा भव इति त्रिर्वदेत्। ततो दानप्रतिष्ठां दद्यात् अद्य कृतैतत्सौवर्णी श्रीविष्णुप्रतिमादानप्रतिष्ठार्थं इदं द्रव्यं अमुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यं सम्प्रददे। इति दद्यात्। ततोऽभिषेक - तिलकविप्राशिषो गृहीत्वा सम्प्रदायानुरोधेन भूयसीदक्षिणादानं ब्राह्मणभोजनं च कारयेत्।। ततः कन्याया वैवाहिकं विधिं कुर्यात्।

।।इति श्रीविष्णुप्रतिमा विवाह विधिः।।

(कुम्भ विवाह विधान भी इसी प्रकार से होता है। विष्णु की जगह कुम्भ पूजा होती है एवं संकल्प में भेद करे।)

# अथ नामकरणसंस्कारः

सूतकान्ते शुभेऽह्नि प्रथमं पञ्चगव्यप्रोक्षणपूर्वकं सूतिकायै – पञ्चगव्यं दत्त्वा कुमारपिता मङ्गलं स्नात्वा कुमारञ्च संस्नाप्याऽहते वाससी परिधाय धृतमंगलतिलकः शुभासने उपविश्याचम्य प्राणानायम्य, देशकालौ संकीर्त्य ममास्य शिशोः बीजगर्भ-समुद्भवैनोऽपमार्जनायुरभिवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं नामकरणं करिष्ये तन्निर्विघ्नतार्थं श्रीगणपत्यादिपूजनञ्च करिष्ये। ततो गणेशादिपूजनं कृत्वा पूर्वोक्तहोमविधिनाज्यादि-प्रायश्चित्तसंज्ञकहोमपूर्वकं ॐ प्रजापतये स्वाहा – इदं प्रजापतये। ॐ अग्नये स्विष्टकृते स्वाहा इति स्विष्टकृद्होमं कृत्वा पूर्णपात्रदानादिपूर्णाहुतिहोमान्तकर्म समापयेत्। ततः पञ्चाश्वत्थपत्रेषु सुवर्णशलाकया पञ्चनामानि लेखयित्वा कांस्यपात्रे प्रसारिततण्डुलोपरि आधारस्थशंखोपरि वा संस्थाप्य ममास्य शिशोः बह्वायुष्यप्राप्त्यर्थं नामदेवतापूजनं करिष्ये। इति सङ्कल्प्य ॐ मनोजूतिरित प्रतिष्ठां कृत्वा ॐ श्रीश्च ते इति मन्त्रेण नामदेवताभ्यो नमः इति – यथा लब्धोपचारैः पूजयेत्। ततः शंख–घण्टा भेरी-तूर्य-वादित्रादि रवे जायमाने दक्षिणतो मातुरुत्सङ्गस्थस्य प्राङ्मुखस्य शिशोः दक्षिणकर्णे हे कुमार त्वममुककुलदेवता हे भक्तोऽसि कुमार त्वममुकशर्मा, वर्मा, गुप्तनामासि इत्येवं बालकर्णे त्रिवारं श्रावयित्वा – ॐ मनोजूतिरिति मन्त्रपाठान्ते विप्रा वदेयुः – नाम सुप्रतिष्ठिमस्तु।।

ततः पिता करौ बद्धवा ब्राह्मणानभिवादेयत्। हे कुमार त्वममुकदेवभक्तोऽसि सर्वान् ब्राह्मणानभिवादय इति पितोपांशु वदेत्। आयुष्मान् भव सौम्य इति विप्राः वदेयुः। ततो ब्राह्मणा वेदोऽसीति मन्त्रेण शिशवे आशिषं दद्युः – ॐ वेदोऽसि येन त्वं देव वेद देवेभ्यो वेदोऽभवस्तेन मह्यं वेदो भूयाः। ततः पिता शिशुं स्वमङ्के धृत्वा इमं मन्त्रं पठेत् – ओं अङ्गादङ्गात्संभवसि हृदयादधिजायसे। आत्मा वै पुत्रनामासि सञ्जीव शरदः शतम्।। इति पठित्वा देवताभ्यो ब्राह्मणेभ्यश्च नमस्कृत्य, आचार्यादिभ्यो दानदक्षिणादिभिः सन्तोषयेत्। ततो राशिग्रहणं गोदानछायापात्रदानञ्च कृत्वा स्वशक्तयनुरूपं ब्राह्मणान्संभोज्य पश्चात्बान्धवः स्वयं भुञ्जीत। कुमार्या अपि नामकरणममन्त्रकं नाममन्त्रप्रयुक्तं वा कुर्यात्। शुभम्।।

।। इति नामकरण संस्कारः।।

# ।।अथ सूर्यादिग्रह शान्ति प्रयोगः।।

तत्र तावदादित्यस्य शान्तिः। मदनरत्ने हस्तनक्षत्रयुतं आदित्यवारं प्रगुह्य सप्तनक्तव्रतानि भक्तितः कृत्वा प्रतिदिनं रक्तपुष्पाक्षतातिमिरर्कमभ्यर्च्य सप्तमे प्राप्ते प्रातः स्नात्वा शुक्लधौतवाससी परिधाय यथायोग्यालङ्कृतः स्वासने प्राङ्मुख उपविश्य दक्षिणपार्श्वे संभारान् संस्थाप्य धृतपवित्रतिलकः पत्न्या समारब्धों द्विराचम्य प्राणानायम्य शान्तिपाठं पठित्वा लक्ष्मीनारायणादिदेवान् प्रणमेत्! ततो देशकालौ संकीर्त्य अद्ये॰ शुभपुण्यतिथावमुकगोत्रोऽमुकशर्मा वा गुप्तोऽहं मम श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं मम कलत्रादिभिः सह जन्मराशेः सकाशात् नामराशेः सकाशाद्वा जन्मलग्नात् वर्षलग्नात् गोचराद्वा चतुर्थाष्टमद्वादशाद्यनिष्टस्थानस्थितसूर्येणसूचितं सूचयिष्यमाणं च यत् सर्वारिष्टं तद्विनाशार्थं सर्वदा तृतीयैकादशशुभस्थानस्थितवदुत्तमफलप्राप्त्यर्थं तथा दशान्तर-दशोपदशाजनितपीड़ाल्पायुरधिदैवाधिभौतिककाध्यात्मिकजनितक्लेशनिवृत्तिपूर्वक - शरीरारोग्यार्थं परमैश्वर्य्यादिप्राप्त्यर्थ श्रीसूर्यनारायणप्रसन्नतार्थं चादित्यशान्तिं करिष्ये। इति संकल्प्य तदंगत्वेन गणपतिपूजनं स्वस्तिपुण्याह वाचनमाचार्यवरणं दिग्रक्षणं अग्निस्थापनपूर्वकं सामान्यतो ग्रहपूजनं च पूर्ववत् कुर्यात्। ततो वेदीमध्ये पद्मे ताम्रकलशं संस्थाप्य तदुपरि ताम्रपात्रे शुद्धसुवर्णमयीं प्रधानदेवसूर्यप्रतिमां अग्न्युत्तारणपूर्वकं सन्निधाय रक्तपट्टयुगच्छन्नां छत्रोपानद्युगान्वितां च कृत्वा घृतेन संस्नाप्य रक्तचन्दनरक्त-पुष्पाक्षतादिभिः पुरुषसूक्तेन षोडशोपचारैः सम्पूज्य लड्डूकान्निवेद्य प्रणम्य कुशकण्डिकां कृत्वा आज्यभागान्ते प्रधानदेवसूर्याय दधिक्षीरघृताक्ताश्चरु-शाकल्य-सहिता अर्कसमिधः ॐ आकृष्णेन रजसेति मन्त्रेणाष्टोत्तर शतसंख्यया जुहुयात् इदं सूर्याय न मम इति त्यागः कार्यः। ततो होमान्ते दिक्पालक्षेत्रपालादिभ्यो बलिदानं पूर्णाहुतिहोमं च कृत्वा ततो मंजिष्ठां गजमदं कुंकुमं रक्तचन्दनं जलपूर्णेन ताम्रकुम्भे क्षिप्त्वा पूर्ववदभिषेकं ग्रहस्नानं च कुर्यात्। तता वेदविदुषे ब्राह्मणाय ॐ इमां सूर्यप्रतिमां सोपस्करां तुभ्यमहं सम्प्रददे। इति संकल्प्य ॐ आदिदेव नमस्तुभ्यं सप्तसप्ते दिवाकर। त्वं रवे तारयस्वास्मानस्मात्संसारसागरात्।। इति मन्त्रेण प्रतिमां दद्यात्। ततो माणिक्य, गोधूम, धनु, रक्तवस्त्र, गुण, ताम्र, रक्तचन्दन, कमलानि रवेः प्रीत्यर्थं देवानि। ततो विप्रेभ्यो दक्षिणादानम, देवविसर्जनं च कृत्वा ब्राह्मणान् सम्भोजयित्वा कर्मपूर्तिकामो विष्णु संस्मरेत् एवं सूर्यपीडासु घोरासु कृता शान्तिः शुभप्रदा। इत्यादित्यशान्तिः।

## अथ चन्द्रशान्तिप्रयोगः

चित्रासु सोमवार संगृह्य सप्तनक्तव्रतानि कृत्वा प्रतिदिनं श्वेतपुष्पादिभिः सोममभ्यर्च्य सप्तमे प्राप्ते प्रातः स्नानादि विधाय, देशकालौ संकीर्त्य अर्कशान्त्युक्तवत् संकल्पान्ते चन्द्रशान्ति करिष्ये। इति संकल्प्य गणपतिपूजनादि अग्निस्थापनान्तं कर्म कृत्वा ग्रहपूजनं कुर्यात्। ततो मण्डलमध्ये दध्वन्नशिखरे राजतं कुंभं संस्थाप्य तदुपरि कांस्यपात्रे राजतीं सोमप्रतिमामग्न्युत्तारणपूर्वकं सन्निधाय श्वेतवस्त्रयुगलेन संवेष्ट्य पादुकोपानहच्छत्र भोजनासनसंयुतं च कृत्वा श्वेतपुष्पाक्षतादिभिः पुरुषसूक्तेन षोडशोपचारैः संपूज्य घृतपायसं निवेद्य, आज्यभागान्तं होमं कृत्वा प्रधान देवसोमाय दधि-मधु-क्षीर-घृताक्ताः शाकल्यसहिताः पलाशसमिधाष्टोत्तरशतम्। ॐ इमं देवाऽसपत्नꣳ इति मन्त्रेण जुहुयात्। ततो होमान्ते बलिदानादि पूर्वोक्तवद् कर्म समाप्य राजते कुंभे उशीरं, शिरीषं, कुंकुमं, श्वेतचन्दनं शंखं न्यस्य अभिषेकं स्नानं च कृत्वा ॐ महादेव जातिवल्लीपुष्पगोक्षीरपांडुर। सोम सौम्यो भवास्माकं सर्वदा ते नमो नमः।। इति मन्त्रेण ब्राह्मणाय प्रतिमां सोपस्करां वंशपात्रस्थतंदुलकर्पूरमौक्तिकश्वेतवस्त्रपूर्णकुंभं-वृषभांश्च निवेद्य देवविसर्जनं ब्राह्मणभोजनादि सर्व कर्म पूर्ववत् समापयेत् एवं कृते महासौम्यः सोमस्तुष्टिकरो भवेत्। इति चन्द्रशान्तिः।

## अथ मङ्गलशान्तिः।।

स्वात्यां भौमवारं संगृह्य सप्तनक्तव्रतेषु भूमावेव भोजनं विधाय सप्तमे प्राप्ते पूर्ववत् सर्वं कृत्वा मण्डलमध्ये कलशं संस्थाप्य तदुपरि ताम्रपात्रे सुवर्णमयी मङ्गलप्रतिमां। निवेश्य रक्तच्छन्नां कुंकुमेनोनुलेपितां कृत्वा रक्तपुष्पाक्षतादिभिः पुरुषसूक्तेन षोडशोपचारैः संपूज्य भक्तया कसारं निवेद्य दधिघृताक्ताः शाकल्यसहिताः खादिर्यः समिधः अष्टोत्तरशतं अग्निर्मूर्धा दिव इति मंत्रेण मंगलाय जुहुयात्। ततः पूर्ववद्धोमं समाप्य ॐ कुज कुप्रभवोऽपि त्वं मंगलः परिगद्यसे। अमंगलं निहत्याशु सर्वदा यच्छ मंगलम्। इति मन्त्रेण कस्मैचित् कुटुम्बिने ब्राह्मणाय मंगलप्रतिमादानं, प्रवाल, गोधुम, मसूरिका, रक्तवृषभ, गुड, सुवर्ण, रक्तवस्त्र ताम्रादिदानं च कुर्यात्। ततो रौप्यकुंभे खदिरं देवदारु तिलानि आमलकानि च न्यस्य अभिषेकं स्नानं च कुर्यात्। अन्यत् सर्व पूर्ववत्। इति भौमशान्तिः।।

## अथ बुधशान्तिप्रयोगः

विशाखासु बुधं संगृह्य सप्त नक्तव्रतानि कृत्वा सप्तमे प्राप्ते सुवर्णप्रतिमां कांस्यपात्रे संस्थाप्य शुक्लवस्त्रयुगच्छन्नां कृत्वा शुक्लगन्धाक्षतपुष्पादिभिः संपूज्य गुडौदनोपहारं निवेद्य दधिमधुघृताक्ताः शाकल्यसहिता अपामार्गसमिद्भिः अष्टोत्तरशत "ॐ उद्बुध्यस्वाग्ने"

इति मन्त्रेण जुहुयात्। ततो होमान्ते ॐ बुध त्वं बुद्धिजननो बोधवान् सर्वदा नृणाम्। तत्त्वावबोधं कुरु मे सोमपुत्र नमो नमः।। इति मन्त्रेण ब्राह्मणाय प्रतिमां नीलवस्त्रसुवर्णकांस्यमुद्गरुत्मतह स्तिदन्तपुष्पाणि च निवेद्य मृण्मयकलशे नदीसंगमतोयानि च निक्षिप्य अभिषेकं स्नानं च कुर्यात्। अन्यत् सर्व आदित्यशान्तिवत् इति बुधशान्तिः।

## अथ बृहस्पतिशान्तिप्रयोगः

अनुराधासु गुरुवारं प्रगृह्य सप्त नक्तत्रतानि कृत्वा सप्तमे प्राप्ते पूर्वोक्तादित्यशान्तिवत्सर्वं कार्यं कृत्वा मण्डलमध्ये सुवर्णपात्रे सुवर्णमयीं बृहस्पतिप्रतिमां संस्थाप्य पीताम्बरयुगच्छन्नां पीतयज्ञोपवीतिनीं पादुकोपानच्छत्रकमण्डलुविभूषित च कृत्वा पीतगन्धाक्षतपुष्पादिभिः पुरुषसूक्तेन सम्पूज्य खण्डखाद्योपहारान्निवेद्य दधिमधुघृताक्ताः शाकल्यसहिताः अश्वत्थसमिधोऽष्टोत्तरशतं जुहुयात्। ततो होमान्ते ॐ धर्मशास्त्रार्थतत्त्वज्ञ ज्ञानविज्ञानपारग। विबुधातिहराचिन्त्य देवाचार्य नमोऽस्तु ते।।
इति ब्राह्मणाय गुरोःप्रतिमां पुष्परागमाणिक्यहरिद्राशर्कराश्च पीतधान्यपीतवस्त्रलवण-सुवर्णानि च निवेद्य सुवर्णकलशे औदुम्बर बिल्वं वटं आमलकं च निक्षिप्य तद्युक्तजलेन अभिषेकं स्नानं च कुर्यात्। अन्यत्सर्वं आदित्यशान्तिवत्। इति गुरुशान्तिः।

## अथ शुक्रशान्तिप्रयोगः

ज्येष्ठासु शुक्रं प्रगृह्य सप्तनक्तव्रतेषु भूमावेव भोजनं कृत्वा सप्तमे प्राप्तं वंशपात्रे रजतशुक्रप्रतिमां संस्थाप्य श्वेतचन्दनपंकजैः तद्भावे श्वेतपुष्पादिभिश्च पुरुषसूक्तेन सम्पूज्य घृतसंयुतं पायसं निवेद्य दधिमधुघृताक्ताः शाकल्यसहिता उदुम्बरसमिधः अष्टोत्तरशतं अन्नात्परिस्रु तो रसमिति मन्त्रेण जुहुयात्। ततो होमान्ते ॐ भार्गवो भर्गः शुक्रश्च श्रुतिस्मृतिविशारदः। हित्वा ग्रहकृतान् दोषान् आयुरारोग्यदोऽस्तु सः।।
इति मन्त्रेण ब्राह्मणाय प्रतिमां चित्रवस्त्र, श्वेताश्व, धेनु, वज्र, मणि, सुवर्ण, रजतं तण्डुलानि च निवेद्य रजतकलशे गोरोचनं, कस्तूरिकां, शतपुष्पां, शतावरीं च निक्षिप्य तेनाभिषेकं स्नानं च कुर्यात्। अन्यत्सर्वं पूर्ववत्। इति शुक्रशान्तिः।

## अथ शनैश्वरशान्तिप्रयोगः

द्वादशाष्टमजन्मस्थे शनौ। श्रावणादिमासे प्रथमशनिवारं प्रगृह्य सप्त नक्तव्रतानि कृत्वा सप्तमे पूर्वोक्तादित्यशान्तिवत् सर्वं कृत्वा लोहपात्रे लोहमयीं शनैश्चरप्रतिमां संस्थाप्य कृष्णवस्त्रयुगच्छन्नां, माषतिलकंबलयुतां च कृत्वा पंचामृतेन संस्नाप्य कस्तूरी, कृष्णागुरु

कृष्णपुष्पाक्षतादिभिः षोडशोपचारैः सम्पूज्य कृसरान्नं माषभक्तं पायसं अविलीं पूरिकां च निवेद्य दधिमधुघृताक्ताः शाकल्यसहिताः शमी समिधाष्टोत्तरशतं - ॐ शन्नो देवीरिति मन्त्रेण जुहुयात्। ततो होमान्ते बलिदानं पूर्णाहुतिहोमं च सम्पाद्य प्रतिमां इन्द्रनील, माष, तैल, तिल, कुलित्थ, महिषी, लोह, कृष्णधेनूश्च दद्यात्।
लोहकुंभे तिल, माष, प्रियंगु गंधपुष्पाणि प्रक्षिप्य तद्युक्तजलेना भिषेकं स्नानं च कुर्यात्। अन्यत्सर्वं पूर्ववत्। इति शनैश्चरशान्तिः।।

### अथ राहुकेतुशान्तिप्रयोगः।।

बुधवा शनैश्चरवारे राहुव्रतं प्रगृह्य सप्त नक्तव्रतानि कृत्वा सप्तमे प्राप्ते लोहपात्रे राहोर्लोहप्रतिमां संस्नाप्य कृष्णवस्त्रयुगच्छन्नां च कृत्वा पंचामृतेन संस्नाप्य गन्धपुष्पाक्षता-दिभिः संपूज्य पायसं निवेद्य दधिमधुघृताक्ताः शाकल्यसहिता दूर्वासमिधाष्टोत्तरशतं ॐ कयानश्चित्रेति मंत्रेण जुहुयात्। ततो होमान्ते प्रतिमादानं कृत्वा गोमेदाश्व नीलवस्त्र, कंबल, तैल, तिल, लोहानि राहवे वैडूर्य, तैल, तिल, कंबल, कस्तूरी, छाग, वस्त्राणि च केतवे दद्यात्।
माहिषे शृंगे गुग्गुलं, हरितालं, च मनःशिलां च निक्षिप्य तेनाभिषेकं स्नानं च कुर्यात्। अन्यत् सर्वं ब्राह्मणभोजनादि पूर्ववत् एवमेव केतुशान्तिस्तत्र समिधः कुशमच्यः।
मन्त्रः - ॐ केतुं कृण्वन् इत्यादि स्नानं तु वराहविहितपर्वताग्रमृदं छागक्षीरं खड्गपात्रे कृत्वा कुर्यात्। अन्यत् सर्व पूर्वोक्तशान्तिवत्। इति राहुकेतुशान्तिप्रयोगः।।

## ।।अथ श्रीसूक्त प्रयोग।।

हिरण्यवर्णामिति पञ्चदशर्चस्य श्रीसूक्तस्य आनन्द-कर्दम-चिक्लीतेन्दिर। सुता ऋषयः, आद्यानां तिसृणामनुष्टुप्छन्दः, चतर्थ्याः प्रस्तारपंक्तिश्छन्दः, पञ्चमीषष्ठ्योस्त्रिष्टुप्छन्दः, ततोऽष्टानामनुप्टुप्छन्दः, अन्त्यायाः प्रस्तारपंक्तिश्छन्दः, न्यासे हवने पूजने च विनियोगः।

| | | |
|---|---|---|
| १. | ॐ हिरण्यवर्णाम्०। | वामकरे। |
| २. | ॐ तां म आवह०। | दक्षिणकरे। |
| ३. | ॐ अश्वपूर्वाम्०। | वामपादे। |
| ४. | ॐ कां सोस्मिताम्०। | दक्षिणपादे। |
| ५. | ॐ चन्द्रां प्रभासाम्०। | वामजानौ। |
| ६. | ॐ आदित्यवर्णे०। | दक्षिणजानौ। |
| ७. | ॐ उपैतु माम्०। | वामकट्याम्। |

| | | |
|---|---|---|
| ८. | ॐ क्षुत्पिपासामलाम्॰। | दक्षिणकट्याम्। |
| ९. | ॐ गन्धद्वाराम्॰। | नाभौ। |
| १०. | ॐ मनसः काममाकूतिम्॰। | हृदये। |
| ११. | ॐ कर्दमेन प्रजा भूता॰। | वामबाहौ। |
| १२. | ॐ आपः सृजन्तु॰। | दक्षिणबाहौ। |
| १३. | ॐ आर्द्रां पुष्करिणीम्॰। | कण्ठे। |
| १४. | ॐ आर्द्रां यःकरिणीम्॰। | मुखे। |
| १५. | ॐ तां मऽ आवह॰ | नेत्रयोः। |
| १६. | ॐ यः शुचिः प्रयतो भूत्वा॰। | मूर्ध्नि। |

पुनः -

| | | |
|---|---|---|
| १. | कर्दमेन प्रजाभूता॰ | हृदयाय नमः। |
| २. | आपः सृजन्तु॰ | शिरसे स्वाहा। |
| ३. | आर्द्रां पुष्करिणीम्॰ | शिखायै वषट्। |
| ४. | आर्द्रां यःकरिणीम्॰ | कवचाय हुम्। |
| ५. | तां म आवह॰ | नेत्राभ्यां वौषट्। |
| ६. | यः शुचिः प्रयतो भूत्वा॰ | अस्त्राय फट्। |

**ध्यानम् -** या सा पद्मासनस्था विपुलकटितटी पद्मपत्रायताक्षी गम्भीरावर्तनाभिस्तन-भरनमिता शुभ्रवस्त्रोत्तरीया। लक्ष्मीर्दिव्यैर्गजेन्द्रैर्मणिगणखचितैः स्नापिता हेमकुम्भै-र्नित्यं सा पद्महस्ता मम वसतु गृहे सर्वमाङ्गल्ययुक्ता।।१।।

अमलकमलसंस्था तद्रजःपुञ्जवर्णा करकमलधृतेष्टाभीतियुग्माम्बुजा च। मणिमुकुट-विचित्रालङ्कृताकल्पजालैर्भवतु भुवनमाता सन्ततं श्रीः श्रियै नः।।२।।

।।इति श्रीसूक्तन्यासः।।

## श्रीसूक्तम्

ॐ हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम्। चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आ वह।।१।।
तां म आ वह जातवेदो लक्ष्मीमनपगामिनीम्। यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम्।।२।।
अश्वपूर्वां रथमध्यां हस्तिनादप्रमोदिनीम्। श्रियं देवीमुप ह्वये श्रीर्मा देवी जुषताम्।।३।।
कां सोस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम्। पद्मेस्थितां पद्मवर्णां तामिहोप ह्वये श्रियम्।।४।।

चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदारम्। तां पद्मिनीमी शरणं प्र पद्ये अलक्ष्मीर्मे नश्यतां त्वा वृणे।।५।।
आदित्यवर्णे तपसोऽधि जातो वनस्पतिस्तव वृक्षोऽथ बिल्वः। तस्य फलानि तपसा नुदन्तु या अन्तरा याश्च बाह्या अलक्ष्मीः।।६।।
उपैतु मां देवसखः कीर्तिश्च मणिना सह। प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन् कीर्तिमृद्धिं ददातु मे।।७।।
क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम्। अभूतिमसमृद्धिं च सर्वां निर्णुद मे गृहात्।।८।।
गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीं सर्वभूतानां तामिहोप ह्वये श्रियम्।।९।।
मनसः काममाकूतिं वाचः सत्यमशीमहि। पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः।।१०।।
कर्दमेन प्रजा भूता मयि सम्भव कर्दम। श्रियं वासय मे कुले मातरं पद्ममालिनीम्।।११।।
आपः सृजन्तु स्निग्धानि चिक्लीत वस मे गृहे। नि च देवीं मातरं श्रियं वासय मे कुले।।१२।।
आर्द्रां पुष्करिणीं पुष्टिं पिङ्गलां पद्ममालिनीम्। चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आ वह।।१३।।
आर्द्रां यः करिणीं यष्टिं सुवर्णां हेमालिनीम्। सूर्यां हिरण्मयीं लक्ष्मी जातवेदो म आ वह।।१४।।
तां म आ वह जातवेदो लक्ष्मीमनपगामिनीम्। यस्यां हिरण्यं प्रभूतं गावो दास्योऽश्वान् विन्देयं पुरुषानहम्।।१५।।
यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम्। सूक्तं पञ्चदशर्चं च श्रीकामः सततं जपेत्।।१६।।
पद्मानने पद्मविपद्मपत्रे पद्मप्रिये पद्मदलायताक्षि। विश्वप्रिये विष्णुमनोऽनुकूले त्वत्पादपद्मं मयि सं नि धत्स्व।।१७।।
पद्मानने पद्मऊरू पद्माक्षि पद्मसम्भवे। तन्मे भजसि पद्माक्षि येन सौख्यं लभाम्यहम्।।१८।।
अश्वदायि गोदायि धनदायि महाधने। धनं मे जुषतां देवि सर्वकामांश्च देहि मे।।१९।।
पुत्रपौत्रधनं धान्यं हस्त्यश्वाश्वतरी रथम्। प्रजानां भवसि माता आयुष्मन्तं करोतु मे।।२०।।
धनमग्निर्धनं वायुर्धनं सूर्यो धनं वसुः। धनमिन्द्रो बृहस्पतिर्वरुणो धनमश्विना।।२१।।
वैनतेय सोमं पिब सोमं पिबतु वृत्रहा। सोमं धनस्य सोमिनो मह्यं ददातु सोमिनः।।२२।।
न क्रोधो न च मात्सर्यं लोभो नाशुभा मतिः। भवन्ति कृतपुण्यानां भक्तया श्रीसूक्त-जापिनाम्।।२३।।
सरसिजनिलये सरोजहस्ते धवलतरांशुकगन्धमाल्यशोभे। भगवति हरिवल्लभे मनोज्ञे त्रिभुवनभूतिकरि प्र सीद मह्यम्।।२४।।
विष्णुपत्नीं क्षमां देवीं माधवीं माधवप्रियाम्। लक्ष्मीं प्रियसखीं भूमिं नमाम्यच्युत-वल्लभाम्।।२५।।
महालक्ष्म्यै च विद्महे विष्णुपत्न्यै च धीमहि। तन्नो लक्ष्मीः प्र चोदयात्।।२६।।
आनन्दः कर्दमः श्रीदश्चिक्लीत इति विश्रुताः। ऋषयः श्रियः पुत्राश्च श्रीर्देवीर्देवता मताः।।२७।।
ऋणरोगादिदारिद्र्यपापक्षुदपमृत्यवः भयशोकमनस्तापा नश्यन्तु मम सर्वदा।।२८।।
श्रीर्वर्चस्वमायुष्यमारोग्यमाविधाच्छोभमानं महीयते। धनं धान्यं पशुं बहुपुत्रलाभं शतसंवत्सरं दीर्घमायुः।।२९।।

## ।।रुद्रयामलोक्त श्री सूक्तस्य सम्पुट विधि अनुष्ठान।।

ॐ श्रीं ह्रीं श्रीं कमले कमलालये प्रसीद प्रसीद श्रीं ह्रीं श्रीं ॐ महालक्ष्म्यै नमः।
ॐ दुर्गे स्मृता हरसि भीतिमशेषजन्तोः स्वस्थैः स्मृता मतिमतीव शुभां ददासि।
ॐ हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम्। चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आ वह।।१।।
दारिद्र्यदुःखभयहारिणि का त्वदन्या सर्वोपकारकरणाय सदार्द्रचित्ता।।
ॐ श्रीं ह्रीं श्रीं कमले कमलालये प्रसीद प्रसीद श्रीं ह्रीं श्रीं ॐ महालक्ष्म्यै नमः।
ॐ दुर्गे स्मृता हरसि भीतिमशेषजन्तोः स्वस्थैः स्मृता मतिमतीव शुभां ददासि।
ॐ तां म ऽआ वह जातवेदो लक्ष्मीमनपगामिनीम्। यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम्।।२।।
दारिद्र्यदुःखभयहारिणि का त्वदन्या सर्वोपकारकरणाय सदार्द्रचित्ता।।
ॐ श्रीं ह्रीं श्रीं कमले कमलालये प्रसीद प्रसीद श्रीं ह्रीं श्रीं ॐ महालक्ष्म्यै नमः।
ॐ दुर्गे स्मृता हरसि भीतिमशेषजन्तोः स्वस्थैः स्मृता मतिमतीव शुभां ददासि।
ॐ अश्वपूर्वां रथमध्यां हस्तिनादप्रमोदिनीम्। श्रियं देवीमुप ह्वये श्रीर्मा देवी जुषताम्।।३।।
दारिद्र्यदुःखभयहारिणि का त्वदन्या सर्वोपकारकरणाय सदार्द्रचित्ता।।
ॐ श्रीं ह्रीं श्रीं कमले कमलालये प्रसीद प्रसीद श्रीं ह्रीं श्रीं ॐ महालक्ष्म्यै नमः।
ॐ दुर्गे स्मृता हरसि भीतिमशेषजन्तोः स्वस्थैः स्मृता मतिमतीव शुभां ददासि।
ॐ कां सोस्मितां हिरण्यप्राकारामार्द्रां ज्वलंतीं तृप्तां तर्पयन्तीम्। पद्मे स्थितां पद्मवर्णां तामिहोप ह्वये श्रियम्।।४।।
दारिद्र्यदुःखभयहारिणि का त्वदन्या सर्वोपकारकरणाय सदार्द्रचित्ता।।
ॐ श्रीं ह्रीं श्रीं कमले कमलालये प्रसीद प्रसीद श्रीं ह्रीं श्रीं ॐ महालक्ष्म्यै नमः।
ॐ दुर्गे स्मृता हरसि भीतिमशेषजन्तोः स्वस्थैः स्मृता मतिमतीव शुभां ददासि।
ॐ चद्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम्। तां पद्मिनीमीं शरणमहं प्रपद्ये ऽलक्ष्मीर्मे नश्यतां त्वां वृणोमि।।५।।
दारिद्र्यदुःखभयहारिणि का त्वदन्या सर्वोपकारकरणाय सदार्द्रचित्ता।।
ॐ श्रीं ह्रीं श्रीं कमले कमलालये प्रसीद प्रसीद श्रीं ह्रीं श्रीं ॐ महालक्ष्म्यै नमः।
ॐ दुर्गे स्मृता हरसि भीतिमशेषजन्तोः स्वस्थैः स्मृता मतिमतीव शुभां ददासि।
ॐ आदित्यवर्णे तपसोऽधिजातो वनस्पतिस्तव वृक्षोऽथ बिल्वः तस्य फलानि तपसा नुदन्तु या अन्तरा याश्च बाह्या अलक्ष्मीः।।६।।
दारिद्र्यदुःखभयहारिणि का त्वदन्या सर्वोपकारकरणाय सदार्द्रचित्ता।।

ॐ श्रीं ह्रीं श्रीं कमले कमलालये प्रसीद प्रसीद श्रीं ह्रीं श्रीं ॐ महालक्ष्म्यै नमः।
ॐ दुर्गे स्मृता हरसि भीतिमशेषजन्तोः स्वस्थैः स्मृता मतिमतीव शुभां ददासि।
ॐ उपैतु मां देवसखः कीर्तिश्च मणिना सह। प्रादुर्भूतोऽस्मिराष्ट्रेऽस्मिन् कीर्त्तिमृद्धि ददातु मे।।७।।
दारिद्र्यदुःखभयहारिणि का त्वदन्या सर्वोपकारकरणाय सदार्द्रचित्ता।।
ॐ श्रीं ह्रीं श्रीं कमले कमलालये प्रसीद प्रसीद श्रीं ह्रीं श्रीं ॐ महालक्ष्म्यै नमः।
ॐ दुर्गे स्मृता हरसि भीतिमशेषजन्तोः स्वस्थैः स्मृता मतिमतीव शुभां ददासि।
ॐ क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम्। अभूतिमसमृद्धिं च सर्वां निर्णुद मे गृहात्।।८।।
दारिद्र्यदुःखभयहारिणि का त्वदन्या सर्वोपकारकरणाय सदार्द्रचित्ता।।
ॐ श्रीं ह्रीं श्रीं कमले कमलालये प्रसीद प्रसीद श्रीं ह्रीं श्रीं ॐ महालक्ष्म्यै नमः।
ॐ दुर्गे स्मृता हरसि भीतिमशेषजन्तोः स्वस्थैः स्मृता मतिमतीव शुभां ददासि।
ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीं सर्वभूतानां तामिहोप ह्वये श्रियम्।।९।।
दारिद्र्यदुःखभयहारिणि का त्वदन्या सर्वोपकारकरणाय सदार्द्रचित्ता।।
ॐ श्रीं ह्रीं श्रीं कमले कमलालये प्रसीद प्रसीद श्रीं ह्रीं श्रीं ॐ महालक्ष्म्यै नमः।
ॐ दुर्गे स्मृता हरसि भीतिमशेषजन्तोः स्वस्थैः स्मृता मतिमतीव शुभां ददासि।
ॐ मनसः काममाकूतिं वाचः सत्यमशीमहि। पशूनां रूपमन्नस्य मयिः श्रीः श्रयतां यशः।।१०।।
दारिद्र्यदुःखभयहारिणि का त्वदन्या सर्वोपकारकरणाय सदार्द्रचित्ता।।
ॐ श्रीं ह्रीं श्रीं कमले कमलालये प्रसीद प्रसीद श्रीं ह्रीं श्रीं ॐ महालक्ष्म्यै नमः।
ॐ दुर्गे स्मृता हरसि भीतिमशेषजन्तोः स्वस्थैः स्मृता मतिमतीव शुभां ददासि।
ॐ कर्दमेन प्रजा भूता मयि सम्भव कर्दम। श्रियं वासय मे कुले मातरं पद्ममालिनीम्।।११।।
दारिद्र्यदुःखभयहारिणि का त्वदन्या सर्वोपकारकरणाय सदार्द्रचित्ता।।
ॐ श्रीं ह्रीं श्रीं कमले कमलालये प्रसीद प्रसीद श्रीं ह्रीं श्रीं ॐ महालक्ष्म्यै नमः।
ॐ दुर्गे स्मृता हरसि भीतिमशेषजन्तोः स्वस्थैः स्मृता मतिमतीव शुभां ददासि।
ॐ आपः सृजन्तु स्निग्धानि चिक्लीत वस मे गृहे। नि च देवीं मातंर श्रियं वासय मे कुले।।१२।।
दारिद्र्यदुःखभयहारिणि का त्वदन्या सर्वोपकारकरणाय सदार्द्रचित्ता।।
ॐ श्रीं ह्रीं श्रीं कमले कमलालये प्रसीद प्रसीद श्रीं ह्रीं श्रीं ॐ महालक्ष्म्यै नमः।
ॐ दुर्गे स्मृता हरसि भीतिमशेषजन्तोः स्वस्थैः स्मृता मतिमतीव शुभां ददासि।
ॐ आर्द्रां पुष्करिणीं पुष्टिं पिङ्गलां पद्ममालिनीम्। चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आ वह।।१३।।
दारिद्र्यदुःखभयहारिणि का त्वदन्या सर्वोपकारकरणाय सदार्द्रचित्ता।।
ॐ श्रीं ह्रीं श्रीं कमले कमलालये प्रसीद प्रसीद श्रीं ह्रीं श्रीं ॐ महालक्ष्म्यै नमः।

ॐ दुर्गे स्मृता हरसि भीतिमशेषजन्तोः स्वस्थैः स्मृता मतिमतीव शुभां ददासि।
ॐ आर्द्रां यः करिणीं यष्टिं सुवर्णां हेममालिनीम । सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो म आ वह।।१४।।
दारिद्र्यदुःखभयहारिणि का त्वदन्या सर्वोपकारकरणाय सदार्द्रचित्ता।।
ॐ श्रीं ह्रीं श्रीं कमले कमलालये प्रसीद प्रसीद श्रीं ह्रीं श्रीं ॐ महालक्ष्म्यै नमः।
ॐ दुर्गे स्मृता हरसि भीतिमशेषजन्तोः स्वस्थैः स्मृता मतिमतीव शुभां ददासि।
ॐ तां म ऽआ वह जातवेदो लक्ष्मीमनपगामिनीम्। यस्यां हिरण्यं प्रभूतं गावो दास्योऽश्वान् विन्देयं पुरुषानहम्।।१५।।
दारिद्र्यदुःखभयहारिणि का त्वदन्या सर्वोपकारकरणाय सदार्द्रचित्ता।।
ॐ श्रीं ह्रीं श्रीं कमले कमलालये प्रसीद प्रसीद श्रीं ह्रीं श्रीं ॐ महालक्ष्म्यै नमः।
ॐ दुर्गे स्मृता हरसि भीतिमशेषजन्तोः स्वस्थैः स्मृता मतिमतीव शुभां ददासि।
ॐ यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम्। सूक्तं पञ्चदशर्चं च श्रीकामः सततं जपेत्।।१६।।
दारिद्र्यदुःखभयहारिणि का त्वदन्या सर्वोपकारकरणाय सदार्द्रचित्ता।।

।।इति रुद्रयामले शिवपार्वतीसंवादे श्रींसूक्तस्य पुरश्चरणविधिः।।

(११०० पाठ करने के पश्चात् विधि विधानपूर्वक हवन करने से निश्चित ही लक्ष्मी प्राप्ति एवं दरिद्रता का नाश होता है।)

**हवनीय द्रव्य -** कमलबीज, कमलपुष्प, मधु, पायस, बिल्वपत्र, बिल्वफल इत्यादि।।

# ।।अथ श्री कनकधारा स्तोत्र।।

(श्री कनकधारा स्तोत्र का श्रद्धा-विश्वासपूर्वक पाठ अनुष्ठान से ऋण मुक्ति और लक्ष्मी प्राप्ति होती है। इस अनुष्ठान के पाठ से श्री शंङ्कराचार्य ने स्वर्ण वर्षा करायी थी।)

अङ्गं हरेः पुलकभूषणमाश्रयन्ती भृङ्गाङ्गनेव मुकुलाभरणं तमालम्।
अङ्गीकृताखिल-विभूतिरपाङ्गलीला माङ्गल्यदाऽस्तु मम मङ्गलदेवतायाः।।१।।
मुग्धा मुहुर्विदधती वदने मुरारेः प्रेमत्रपाप्रणिहितानी गतागतानि। माला दृशोर्मधुकरीव महोत्पले या सा मे श्रियं दिशतु सागरसम्भवायाः।।२।।
विश्वामरेन्द्रपदविभ्रमदानदक्षमानन्दहेतुरधिकं मुरविद्विषोऽपि। ईषन्निषीदतु मयि क्षणमीक्षणार्धमिन्दीवरोदरसहोदरमिन्दिरायाः।।३।।
आमीलिताक्षमधिगम्य मुदा मुकुन्दमानन्दकन्दमनिमेषमनङ्गतन्त्रम्। आकेकरस्थित-कनीनिकपक्ष्मनेत्रं भूत्यै भवेन्मम भुजङ्गशयाङ्गनायाः।।४।।

बाह्वन्तरे मधुजितः श्रितकौस्तुभे या हारावलीव हरिनीलमयी विभाति। कामप्रदा भगवतोऽपि कटाक्षमाला कल्याणमावहतु मे कमलालयायाः।।५।।

कालाम्बुदालिललितोरसि कैटभारेर्धाराधरे स्फुरति या तडिदङ्गनेव। मातुः समस्तजगतां महनीयमूर्तिर्भद्राणि मे दिशतु भार्गवनन्दनायाः।।६।।

प्राप्तं पदं प्रथमतः किल यत्प्रभावान्माङ्गल्यभाजि मधुमाथिनि मन्मथेन। मय्यापतेत्तदिह मन्थरमीक्षणार्धं मन्दालसं च मकरालयकन्यकायाः।।७।।

दद्याद्दयानुपवनो द्रविणाम्बुधारामस्मिन्नकिञ्चनविहङ्गशिशौ विषण्णे। दुष्कर्मघर्ममपनीय चिराय दूरं नारायणप्रणयिनीनयनाम्बुवाहः।।८।।

इष्टा विशिष्टमतयोऽपि यया दयार्द्रदृष्ट्या त्रिविष्टपपदं सुलभं लभन्ते। दृष्टिः प्रहृष्टकमलोदरदीप्तिरिष्टां पुष्टिं कृषीष्ट मम पुष्करविष्टरायाः।।९।।

गीर्देवतेति गरुडध्वजसुन्दरीति शाकम्भरीति शशिशेखरवल्लभेति। सृष्टिस्थितिप्रलयकेलिषु संस्थितायै तस्यै नमस्त्रिभुवनैकगुरोस्तरुण्यै।।१०।।

श्रुत्यै नमोऽस्तु शुभकर्मफलप्रसूत्यै रत्यै नमोऽस्तु रमणीयगुणार्णवायै। शक्तयै नमोऽस्तु शतपत्रनिकेतनायै पुष्ट्यै नमोऽस्तु पुरुषोत्तमवल्लभायै।।११।।

नमोऽस्तु नालीकनिभाननायै नमोऽस्तु दुग्धोदधिजन्मभूत्यै। नमोऽस्तु सोमामृतसोदरायै नमोऽस्तु नारायणवल्लभायै।।१२।।

सम्पत्कराणि सकलेन्द्रियनन्दनानि साम्राज्यदानविभवानि सरोरुहाक्षि। त्वद्वन्दनानि दुरिताहरणोद्यतानि मामेव मातरनिशं कलयन्तु मान्ये।।१३।।

यत्कटाक्षसमुपासनाविधिः सेवकस्य सकलार्थसम्पदः। संतनोति वचनाङ्गमानसैस्त्वां मुरारिहृदयेश्वरीं भजे।।१४।।

सरसिजनिलये सरोजहस्ते धवलतमांशुकगन्धमाल्यशोभे। भगवति हरिवल्लभे मनोज्ञे त्रिभुवनभूतिकरि प्रसीद मह्यम्।।१५।।

दिग्घस्तिभिः कनककुम्भमुखावसृष्टस्वर्वाहिनीविमलचारुजलप्लुताङ्गीम्। प्रातर्नमामि जगतां जननीमशेषलोकाधिनाथगृहिणीममृताब्धिपुत्रीम्।।१६।।

कमले कमलाक्षवल्लभे त्वं करुणापूरतरङ्गितैरपाङ्गैः। अवलोकय मामकिञ्चनानां प्रथमं पात्रमकृत्रिमं दयायाः।।१७।।

स्तुवन्ति ये स्तुतिभिरमूभिरन्वहं त्रयीमयीं त्रिभुवनमातरं रमाम्। गुणाधिका गुरुतरभाग्यभागिनो भवन्ति ते भुवि बुधभाविताशयाः।।१८।।

।।श्रीभगवत्पादशङ्करविरचितं कनकधारास्तोत्रं सम्पूर्णम्।।

# अथ विष्णुसहस्त्रनामस्तोत्रम्

## अथ सर्वव्याधिहरणविष्णुसहस्त्रनामविधानम्

तत्र प्रयोग: – सुमूहूर्ते शिवालयादिषु कृतनित्यक्रिय: स्वासने प्राङ्मुख उपविश्य आचम्य प्राणानायम्य देशकालौ संकीर्त्य ममामुकव्याधे: समूलनाशद्वारा सद्य आरोग्यार्थं श्रीपरमेश्वरप्रीत्यर्थममुकसंख्याया विष्णुसहस्त्रनामजपं करिष्ये। इति संकल्प्य गणेशस्मरणं कृत्वा स्वपुरत: आधारे अन्यलिखितपुस्तकं संस्थाप्य गन्धपुष्पादिभि: सम्पूज्य शापविमोचनं पठेत्। ॐ अस्य श्रीविष्णो: सहस्त्रनाम्नां रुद्रशापविमोचनमन्त्रस्य महादेव ऋषि:, अनुष्टुप्छन्द:, श्रीरुद्रानुग्रहशक्तिर्देवता, सुरेश: शरण शर्मेति बीजम्, अनन्तो हुतभुग्भोक्तेति शक्ति:, सुरेश्वरायेति कीलकं, रुद्रशापविमोचने विनियोग:। ॐ क्लीं ह्रीं अङ्गुष्ठाभ्यां नम:। ॐ ह्रीं तर्जनीभ्यां नम:। ॐ ह्रूँ मध्यमाभ्यां नम:। ॐ ह्रैं अनामिकाभ्यां नम:। ॐ ह्रौं कनिष्ठिकाभ्यां नम:। ॐ ह्र: करतलकरपृष्ठाभ्यां नम:। इति करन्यास:। एवमेव हृदयादिन्यासं कृत्वा ध्यायेत्।। अथ ध्यानम्।। तमालश्यामलतनुं पीतकौशेयवाससम्। वर्णमूर्तिमयं देवं ध्यायेन्नारायणं विभुम्।।१।। इति ध्यात्वा मानसोपचारै: सम्पूज्य। ॐ क्लीं ह्रां ह्रीं ह्रूं ह्रैं ह्रौ ह्र: स्वाहा इति मन्त्रं शतवारं दशवारं वा जप्त्वा किंचिज्जलं क्षिप्त्वा प्रार्थयेत्।। ॐ श्रीविष्णो: सहस्त्रनामस्तवो रुद्रशापविमुक्तो भव इति प्रार्थ्य सततं तदनन्तरं सहस्त्रनामपठनं कुर्य्यात्। विष्णो: सहस्त्रनाम्नां यो ह्यकृत्वा शापमोचनम्। पठेच्छुभानि सर्वाणि स्युस्तस्य निष्फलानि तु।।१।। इति रुद्रशापविमोचनं कृत्वा सद्य आरोग्यतासिद्ध्ये न्यासध्यानोत्तरम् अच्युतानन्तगोविन्देति नामत्रयेण सम्पुटितस्य सहस्त्रनामस्तवस्य जप: कार्य्य:। अथवा – ॐ कृष्णाय वासुदेवाय हरये परमात्मने । प्रणतक्लेशनाशाय गोन्दिाय नमो नम:।।१।। इस्यनेन – ॐ आपदामपहर्तारं दातारं सर्वसम्पदाम्। लोकाभिरामं श्रीरामं भूयो भूयो नमाम्यहम्।।२।। अथवा ॐ नम: शम्भवाय च मयोभवाय च नम: शङ्कराय च मयस्कराय च नम: शिवाय च शिवतराय च।। इति मन्त्रेण वा सम्पुटितस्य जपेन सर्वरोगनाश:।।

# अथ गायत्री याग विधान

२४ लाख जप गायत्री पुरश्चरण में होते हैं तथा दशांश हवन–तर्पण मार्जन आदि तथा गायत्री देवी के आवरण पूजन अधोलिखित है। गायत्रीपुरश्चरण संपादन के लिए।
प्रायश्चितं गोदानं कुर्यात्। आचम्य देशकालौ संकीर्त्य मम इह जन्मनि जन्मान्तरेषु च कृतकायिकवाचिकमानसिकसांसर्गिकसमस्तपापक्षयार्थं पुत्रपौत्रधनधान्याभिवृद्ध्यर्थं चतुर्विधपुरुषार्थसिद्ध्यर्थं श्रीपरमेश्वरप्रीत्यर्थं सप्रणवव्याहृतिपूर्वकचतुर्विंशतिलक्षजपात्मक

गायत्रीपुरश्चरणं (स्वयं) विप्रद्वारा वा करिष्ये तदंगत्वेन गणेशपूजनं स्वस्तिपुण्याह-वाचनं मातृकापूजनं नांदीश्राद्धमाचार्यजपकर्तृवरण च करिष्ये।
भूतशुद्ध्यादिबहिर्मातृकान्यासांतं कृत्वा गायत्रीन्यासं कुर्यात्। तद्यथा – ॐ प्रणवस्य ब्रह्मा ऋषिः। गायत्री छंदः। परमात्मा देवता। शरीरशुद्ध्यर्थे जपे विनियोगः।
ॐ ब्रह्मऋषये नमः शिरसि। ॐ गायत्रीछंदसे नमः मुखे।।२।। ॐ परमात्मदेवतायै नमः हृदये।।३।। इति प्रणवन्यासः। सप्तव्याहृतीनां जमदग्नि-भारद्वाजात्रिगौतमकश्यप-विश्वामित्रवसिष्ठाः ऋषयः गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यश्छंदांसि। अग्निवायुसूर्यबृहस्पतिवरुणेंद्रविश्वेदेवा देवताः। न्यासे जपे च विनियोगः।।
ॐ जमदग्निभारद्वाजात्रिगौतमकश्यपविश्वामित्रवसिष्ठऋषिभ्यो नमः शिरसि।१। ॐ गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगतीछंदोभ्यो नमः मुखे।।२।। ॐ अग्निवायुसूर्य-बृहस्पतिवरुणेंद्रविश्वेदेवदेवताभ्यो नमः हृदये।।३।। इति व्याहृतिऋष्यादिन्यासः। गायत्र्या विश्वामित्रऋषिः। गायत्री छंदः। सविता देवता। न्यासे जपे च विनियोगः।
ॐ विश्वामित्रऋषये नमः शिरसि। ॐ गायत्री छन्दसे नमो मुखे। ॐ सवितृदेवतायै नमः हृदये। इति गायत्र्या ऋष्यादिन्यासः। ॐ शिरसः प्रजापतिः ऋषिः ब्रह्माग्निवायुसूर्यो देवताः। यजुश्छंदः। प्राणायामे विनियोगः। ॐ प्रजापतिऋषये नमः शिरसि। ॐ यजुश्छंदसे नमः मुखे। ॐ ब्रह्माग्निवायुसूर्यदेवताभ्यो नमः हृदये। इति शिरस ऋष्यादिन्यासः।।
ॐ भूः अङ्गुष्ठाभ्यां नमः।।१।। ॐ भुवः तर्जनीभ्यां नमः।।२।। ॐ स्वः मध्यमाभ्यां नमः।।३।। ॐ तत्सवितुर्वरेण्यम् अनामिकाभ्यां नमः।।४।। ॐ भर्गोदेवस्य धीमहि कनिष्ठिकाभ्यां नमः।।५।। ॐ धियो यो नः प्रचोदयात् करतलकरपृष्ठाभ्यां नमः।।६।। इति करन्यासः। एवमेव हृदयादि न्यासं कुर्यात्। ततः। ॐ भूः नमः हृदये।।१।। ॐ भुवः नमो मुखे।।२।। ॐ स्वः नमो दक्षांसे।।३।। ॐ महः नमो वामांसे।।४।। ॐ जनः नमो दक्षिणोरौ।।५।। ॐ तपः नमो वामोरौ।।६।। ॐ सत्यं नमः जठरे।।७।। इति व्याहृतिन्यासः।।
अथ गायत्री वर्णन्यासः। ॐ तत् नमः पादद्वयांगुलिमूलयोः।।१।। ॐ सं नमः गुल्फयोः।।२।। ॐ विं नमः जानुनोः।।३।। ॐ तुं नमः पादमूलयोः।।४।। ॐ वं नमः लिंगे।।५।। ॐ रें नमः नाभौ।।६।। ॐ णिं नमः हृदये।।७।। ॐ यं नमः कण्ठे।।८।। ॐ भं नमः हस्तद्वयाङ्गुलीमूलयोः।।९।। ॐ र्गां नमः मणिबंधयोः।।१०।। ॐ दें नमः कूर्परयोः।।११।। ॐ वं नमः बाहुमूलयोः।।१२।। ॐ स्यं नमः आल्ये।।१३।। ॐ धीं नमः नासापुटयोः।।१४।। ॐ मं नमः कपोलयोः।।१५।। ॐ हिं नमः नेत्रयोः।।१६।। ॐ धिं नमः कर्णयोः।।१७।। ॐ यों नमः भ्रूमध्ये।।१८।। ॐ यों नमः मस्तके।।१९।। ॐ नं नमः पश्चिमवक्त्रे।।२०।।

ॐ प्र नमः उत्तरवक्त्रे।।२१।। ॐ चों नमः दक्षिणवक्त्रे।।२२।। ॐ द नमः पूर्ववक्त्रे।।२३।। ॐ यात् नमः ऊर्ध्ववक्त्रे।।२४।। इति गायत्र्यक्षरन्यासः।। ॐ तत् नमः शिरसि।।१।। ॐ सवितुर्नमः भ्रुवोर्मध्ये।।२।। ॐ वरेण्यं नमः नेत्रयोः।।३।। ॐ भर्गो नमः मुखे।।४।। ॐ देवस्य नमः कंठे।।५।। ॐ धीमहि नमः हृदये।।६।। ॐ धियो नमः नाभौ।।७।। ॐ यो नमः गुह्ये।।८।। ॐ नः नमः जानुनोः।।९।। ॐ प्रचोदयात् नमः पादयोः।।१०।। ॐ आपोज्योतीरसोमृतं ब्रह्मभूर्भुवः स्वरोमिति शिरसि।।११।। इति पदन्यासः । ततः ॐ तत्सवितुर्वरेण्यं नमः नाभ्यादिपादांगुलीपर्यन्तम्।।१।। ॐ भर्गो देवस्य धीमहि नमः हृदयाहि नाभ्यन्तम्।।२।। ॐ धियो यो नः प्रचोदयात् नमः मूर्द्धादिहृदयांतम्।।३।। इति विन्यस्य षडंगन्यासं कुर्यात्।।ॐ तत्सवितुर्ब्रह्मणे हृदयाय नमः।।१।। ॐ वरेण्यं विष्णवे शिरसे स्वाहा।।२।। ॐ भर्गोदेवस्य रुद्राय शिखायै वषट्।।३।। ॐ धीमहि ईश्वराय कवचाय हुं।।४।। ॐ धियो यो नः सदाशिवाय नेत्रत्रयाय वौषट्।।५।। ॐ प्रचोदयात् सर्वात्मने अस्त्राय फट्।।६।। इति षडंगन्यासं कृत्वा ध्यायेत्।। अथ ध्यनाम्।। मुक्ताविद्रुमहेमनील-धवलच्छायैर्मुखैस्त्रीक्षणैर्युक्तामिंदुनिबद्धरत्नमुकुटां तत्त्वार्थवर्णात्मिकाम्। सावित्री वरदाभयांकुशकशां पाशं कपालं गुणं शंखं चक्रमथारविन्दयुगलं हस्तैर्वहंती भजे।।१।। इति ध्यात्वा। ॐ लं पृथिव्यात्मकं गन्धं समर्पयामि।।१।। ॐ हँ आकाशात्मकं पुष्पं समर्पयामि।।२।। ॐ यँ वाय्वात्मकं धूपं समर्पयामि।।३।। ॐ रँ तेजआत्मकं दीपं समर्पयामि।।४।। ॐ वँ अमृतात्मकं नैवेद्यं समर्पयामि।।५।। ॐ सँ सर्वात्मकं मंत्रपुष्पं समर्पयामि।।६।। इति मानसोपचारैः संपूज्य (भेदपक्षे) त्रिकोणपीठपूजां कुर्य्यात्।। तद्यथा- पूर्वादिचतुर्दिक्षु मध्ये च। ॐ प्रभूताय नमः।।१।। ॐ विमलाय नमः।।२।। ॐ साराय नमः।।३।। ॐ समाराध्याय नमः।।४।। (मध्ये) ॐ परमसुखाय नमः।।५।। इति संपूज्य तद्बहिः ॐ अं अनन्ताय नमः।।१।। ॐ पृं पृथिव्यै नमः।।२।। ॐ अं अमृतसागराय नमः।।३।। ॐ रं रत्नद्वीपाय नमः।।४।। ॐ हें हेमगिरये नमः।।५।। ॐ नं नन्दनोद्यानाय नमः।।६।। ॐ कं कल्पवृक्षेभ्यो नमः।।७।। ॐ मं मणिभूषितभूतलाय नमः।।८।। ॐ सं सोममंडलाय नमः।।९।। ॐ अं अग्निमंडलाय नमः।।१०।। ॐ सूं सूर्यमंडलाय नमः।।११।। इति पीठदेवताः संपूजयेत्। ततः (पूज्यपूजकयोमध्ये प्राचीं प्रकल्प्य) पूर्वादिक्रमेण। ॐ रां दीप्तायै नमः।।१।। ॐ रीं सूक्ष्मायै नमः।।२।। ॐ रूं जयायै नमः।।३।। ॐ रें भद्राय नमः।।४।। ॐ रैं विभूत्यै नमः।।५।। ॐ रों विमलायै नमः।।६।। ॐ रौं अमोघाये नमः।।७।। ॐ रं विद्युतायै नमः।।८।। (मध्ये) ॐ रः सर्वतोमुख्यै नमः।।९।। इति पीठशक्तिः संस्थाप्य गंधपुष्पैः पूजयेत्। तन्मध्ये ॐ ब्रह्मविष्णुशिवात्मकाय सौराय

योगपीठात्मने नमः। इति पुष्पांजलिना आसनं दत्त्वा। तत्र सर्वतोभद्रमध्ये गायत्रीयंत्रं विलिख्य तदुपरि "ॐ महीद्यौः" इत्यादिमंत्रः पूर्णपात्रांतं पूर्ववत्ताम्रकलशं संस्थाप्य। "तत्त्वायामि" इति वरुणमावाह्य संपूज्य। कलशस्य मुखे विष्णुइत्याद्यभिमंत्र्य। देवदानवसंवादे इत्यादि प्रार्थयेत्। ततः तदुपरि पट्टवस्त्रं शक्तिगंधाष्टकेन यंत्रं विलिख्य तन्मध्ये मूलमंत्रेण। पलस्वर्णमयीं पूर्वोक्तध्यानप्रतिपादितां भगवत्या गायत्र्याः प्रतिमां सावयवां वा त्रिकोणाकारामग्न्युत्तारणपूर्विकां संस्थाप्य प्राणप्रतिष्ठां कृत्वा मूलेन तस्यां भगवतीं वेदमातरं श्रीगायत्रीमावाह्य पुरुषसूक्तेन श्रीसूक्तेन पाद्यादिपुष्पांतैरुपचारैः संपूज्य। आवरणार्चनं कुर्य्यात्। तद्यथा – तत्र त्रिकोणस्य पूर्वकोणे ॐ गायत्र्यै नमः।।१।। (निर्ऋतिकोणे) ॐ सावित्र्यै नमः।।२।। (वायुकोणे) ॐ सरस्वत्यै नमः।।३।। (त्रिकोणांतरालेषु) ॐ ब्रह्मणे नमः।।१।। ॐ विष्णवे नमः।।२।। ॐ रुद्राय नमः।।३।। इति पूजयेत्।। ततो मूलेन पुष्पांजलिं गृहीत्वा "अभीष्टसिद्धिं मे देहि शरणागतवत्सले।। भक्तया समर्पये तुभ्यं प्रथमावरणार्चनम्" इति पुष्पांजलि दत्त्वा विशेषार्घाद्बिन्दुं निक्षिप्य 'पूजितास्तर्पिताः सन्तु' इति वदेत्।। इति प्रथमावरणम्।।१।। ततोऽष्टदले पूर्वादिचतुर्दिक्षु ॐ आदित्याय नमः।।१।। ॐ भानवे नमः।।२।। ॐ भास्कराय नमः।।३।। ॐ रवये नमः।।४।। (आग्नेयादिकेसरेषु) ॐ उषायै नमः।।१।। ॐ प्रज्ञायै नमः।।२।। ॐ प्रभायै नमः।।३।। ॐ संध्यायै नमः।। इति पूजयेत्। ततो मूलमुच्चरन् 'अभीष्टसिद्धि मे देहि॰' इत्यादिना पुष्पांजलिं दद्यात्। इति द्वितीयावरणम्।।२।। ततः षट्कोणे आग्नेयादिकोणकेसरेषु मध्ये दिक्षु च। ॐ ब्रह्मणे हृदयाय नमः।।१।। ॐ विष्णवे शिरसे स्वाहा।।२।। ॐ रुद्राय शिखायै वषट्।।३।। ॐ ईश्वराय कवचाय हुं।।४।। ॐ सदाशिवाय नेत्रत्रयाय वौषट्।।५।। ॐ सर्वात्मने नः अस्त्राय फट्।।६।। इति षडंगानि पूजयेत्।। ततः पुष्पांजलिं गृहीत्वा मूलमुच्चार्य। 'अभीष्टसिद्धि मे देहि॰' इति पुष्पांजलिं दत्त्वा 'पूजितास्तर्पिताः संतु' इति वदेत्। इति तृतीयावरणम्।।३।। ततो वर्तुले प्राचीक्रमेण। ॐ प्रह्लादिन्ये नमः।।१।। ॐ प्रभायै नमः।।२।। ॐ नित्यायै नमः।।३।। ॐ विश्वंभरायै नमः।।४।। ॐ विशालिन्यै नमः।।५।। ॐ प्रभावत्यै नमः।।६।। ॐ जयायै नमः।।७।। ॐ शांत्यै नमः।।८।। इति पूजयेत्।। ततः पुष्पांजलिं गृहीत्वा मूलमुच्चार्य। 'अभीष्टसिद्धि मे देहि॰' इति पुष्पांजलि दत्त्वा 'पूजितास्तर्पिताः संतु' इति वदेत्इति चतुर्थावरणम्।।४।। तद्बाह्ये वर्तुले प्राचीक्रमेण। ॐ कांत्यै नमः।।१।। ॐ दुर्गायै नमः।।२।। ॐ सरस्वत्यै नमः।।३।। ॐ विश्वरूपाय नमः।।४।। ॐ विशालायै नमः।।५।। ॐ ईशायै नमः।।६।। ॐ चापिन्यै नमः।।७।। ॐ विमलायै नमः।।८।। इति पूजयेत्। ततः पुष्पांजलिं गृहीत्वा मूलमुच्चार्य 'अभीष्टसिद्धि मे देहि॰' इति पुष्पांजलिं दत्त्वा 'पूजितास्तर्पिताः संतु' इति वदेत्। इति पञ्चमावरणम्।।५।। तद्बाह्येऽष्टदलमूले

पूर्वादिक्रमेण। ॐ अपहारिण्यै नमः।।१।। ॐ सूक्ष्मायै नमः।।२।। ॐ विश्वयोन्यै नमः।।३।। ॐ जयावहायै नमः।।४।। ॐ पद्मालयायै नमः।।५।। ॐ परायै नमः।।६।। ॐ शोभायै नमः।।७।। ॐ पद्मरूपायै नमः।।८।। इति पूजयेत्। पुष्पांजलिं गृहीत्वा मूलमुच्चार्य 'अभीष्टसिद्धि मे देहि॰' इति पुष्पांजलिं दत्त्वा 'पूजितास्तर्पिताः सन्तु' इति षष्ठावरणम्।।६।। ततोऽष्टदलमध्ये पूर्वादिक्रमेण ॐ आं ब्राह्मयै नमः।।१।। ॐ ईं माहेश्वर्य्यै नमः।।२।। ॐ ऊं कौमार्यै नमः।।३।। ॐ ॠं वैष्णव्यै नमः।।४।। ॐ ॡं वाराह्यै नमः।।५।। ॐ ऐं इन्द्राण्यै नमः।।६।। ॐ ओं चामुंडायै नमः।।७।। ॐ अः महालक्ष्म्यै नमः।।८।। इति पूजयेत्। ततः पुष्पांजलिं गृहीत्वा मूलमुच्चार्य 'अभीष्टसिद्धि मे देहि॰' इति पुष्पांजलिं दत्त्वा 'पूजितास्तर्पिताः सन्तु' इति वदेत्।। इति सप्तमावरणम्।।७।। ततो दलाग्रेषु ॐ सों सोमाय नमः।।१।। ॐ भौं भौमाय नमः।।२।। ॐ बुं बुधाय नमः।।३।। ॐ बृं बृहस्पतये नमः।।४।। ॐ शुं शुक्राय नमः।।५।। ॐ शं शनैश्चराय नमः।।६।। ॐ रां राहवे नमः।।७।। ॐ कें केतवे नमः।। इति पूजयेत्। ततो पुष्पांजलिं गृहीत्वा मूलमुच्चार्य 'अभीष्टसिद्धि मे देहि॰' इति पुष्पांजलिं दत्त्वा 'पूजितास्तर्पिताः सन्तु' इति वदेत्।। इत्यष्टमावरणम्।।८।। ततो भूपुरे पूर्वादिदशदिक्षु ॐ लं इन्द्राय नमः।।१।। ॐ रं अग्नये नमः।।२।। ॐ मं यमाय नमः।।३।। ॐ क्षं निर्ऋतये नमः।।४।। ॐ वं वरुणाय नमः।।५।। ॐ यं वायवे नमः।।६।। ॐ सों सोमाय नमः।।७।। ॐ ईं ईशानाय नमः।।८।। (ईशानपूर्वयोर्मध्ये) ॐ आं ब्रह्मणे नमः।।९।। (निर्ऋतिपश्चिमयोर्मध्ये) ॐ अं अनंताय नमः।।१०।। इति पूजयेत्। ततः पुष्पांजलिं गृहीत्वा मूलमुच्चार्य 'अभीष्टसिद्धि मे देहि॰' इति पुष्पांजलिं दत्त्वा 'पूजितास्तर्पिताः सन्तु' इति वदेत्।। इति नवमावरणम्।।९।। तद्बहिस्तत्तत्समीपे ॐ वं वज्राय नमः।।१।। ॐ शं शक्तये नमः।।२।। ॐ दं दंडाय नमः।।३।। ॐ खं खड्गाय नमः।।४।। ॐ पं पाशाय नमः।।५।। ॐ अं अंकुशाय नमः।।६।। ॐ गं गदायै नमः।।७।। ॐ त्रिं त्रिशूलाय नमः।।८।। ॐ पं पद्माय नमः।।९।। ॐ चं चक्राय नमः।।१०।। इति पूजयेत्। ततः पुष्पांजलिं गृहीत्वा मूलमुच्चार्य 'अभीष्टसिद्धि मे देहि॰' इति पुष्पांजलिं दत्त्वा 'पूजितास्तर्पिताः सन्तु' इति वदेत्। इति दशमावरणम्।।१०।। 'इत्थमावरणैर्देवीं दशभिः परिपूजयेत्।। धर्म्मार्थकाममोक्षाणां भोक्ता स्याद्द्विजसत्तमः।।१।। इत्यावरणपूजां कृत्वा धूपादिनीराजनांतं संपूज्य स्तवेन स्तुत्वा शापविमोचनं पठित्वा यथाविधि जपं कुर्यात्। तत्र मंत्रः। 'ॐ भूर्भुवः स्वः तत्सवितुर्वरेण्य भर्गो देवस्य धीमहि धियो यो नः प्रयोदयात्।।

**( तत्सत् )**

# अथ वाल्मीकि रामायण अनुष्ठान विधिः

**सकलकार्यसिद्ध्यर्थे** - श्रीरामं मानसोपचारैः सम्पूज्य - ॐ आपदामपहर्तारं दातारं सर्वसम्पदाम्। लोकाभिरामं श्रीराम भूयो भूयो नमाम्यहम्।। इति मन्त्रेण सम्पुटितरामायणपाठात्सकलकार्यसिद्धिः।। पुत्रकामो बालकाण्डं पठेत्। लक्ष्मीकामोऽयोध्याकाण्डम्। नष्टराज्यप्राप्तिकामः किष्किन्धाकाण्डम्। सर्वकामः सुन्दरकाण्डम्। शत्रुनाशकामः सर्वकामश्च लंकाकाण्डं पठेत्।। सुन्दरकाण्डे एकोत्तरावृत्त्या पाठः कर्तव्यः, तद्यथा - प्रथमदिने एकः द्वितीये द्वौ तृतीये त्रय इत्यादि एकादश दिनपर्यन्तम्। द्वादशदिने अवशिष्टं सर्गद्वयं पठित्वा पुनः प्रथमसर्गः पठनीयः एवं त्रिरावृत्त्या सकल-कार्यसिद्धिः। सुप्रतिष्ठित-श्री हनुमत्प्रतिमासमीपैकाग्रवृत्त्या सुन्दरकाण्डाच्छीघ्रकार्यसिद्धिः (२० दिन का प्रयोग है।)

(कामना अनुसार अन्य मन्त्रों से सम्पुट सुन्दर काण्ड का पाठ करना परम लाभदायक है।)

# पति-पत्नी में विरोध एवं भेदभाव को दूर करने के लिए शीघ्र फलदायक - अनुष्ठान

(वाल्मीकि रामायण सुन्दर काण्ड) ब्राह्मण द्वारा या स्वयं संकल्पं कुर्यात्। (स्वकीय) (यजमान) भार्यायां (भर्तरि) प्रेमाविर्भावप्राप्त्यर्थं झटिति आनंदप्राप्तिपूर्वकसंगमनार्थ च। (श्लोकः) ॐ यथाहि वानरश्रेष्ठ दुःखक्षयकरो भवेत्। त्वमस्मिन् कार्यनिर्वाहे प्रमाणं हरियूथपः।। राघवस्त्वन्समारम्भान्मयि यत्नपरो भवेत्। काममस्य त्वमेवैकः कार्यस्य परिसाधने। पर्याप्त परिवीरघ्न यशस्यस्ते फलोदयः।

एतयोर्द्वयोर्मन्त्रयोः सर्गस्याद्यन्तयोः सम्पुटितपूर्वक श्रीपवनसुतस्य हनुमतः प्रीत्यर्थं प्रतिदिनं सप्तसर्गस्य पाठं करिष्यामि।

(स्वयं पाठ करें तो संकल्प में करिष्यामि के बदले करिष्ये बोलें)

(सुन्दर पाठ विधान, २ दिन, ९ दिन, १४ दिन, २० दिन, ६८ दिन का विधान लिखा गया है।)

# अथ श्रीविपरीतप्रत्यङ्गिरा

श्रीप्रत्यङ्गिरायै नमः। ॐ अस्य श्रीविपरीतप्रत्यङ्गिरामन्त्रस्य भैरव ऋषिः अनुष्टप्छन्दः श्रीविपरीतप्रत्यङ्गिरादेवता ममाभीष्टसिद्ध्यर्थे जपे पाठे विनियोगः

**अथ करन्यासः -** ॐ ऐं अङ्गुष्ठाभ्यां नमः कवचाय। ॐ ह्रीं तर्जनीभ्या नमः। ॐ श्रीं प्रत्यङ्गिरे मध्माभ्यां नमः। ॐ प्रज्ञाङ्गिरे अनामिकाभ्यां नमः ॐ मां रक्ष कनिष्ठिकाभ्यां नमः। ॐ मम शत्रून्भञ्जय करतलकरपृष्ठाभ्यां नमः एवं हृदयादिन्यासः। ॐ भूर्भुवः स्वः इति दिग्बन्धः मूलमन्त्रः - (ॐ ऐं ह्रीं श्रींप्रत्यङ्गिरे मां रक्ष रक्ष मम शत्रून्भञ्जय भञ्जय फे हुँ फट् स्वाहा) अष्टोत्तरशतञ्चास्य जपं चैव प्रकीर्तितम्। ऋषिस्तु भैरवो नाम छन्दोऽनुष्टुप् प्रकीर्तिततम्।। देवता दैशिका रक्ता वाम प्रत्यङ्गिरेति च।। पूर्वबीजैः षडङ्गानि कल्पयेत्साधकोत्तमः सर्वद्दष्टोपचारैश्च ध्यायेत्प्रत्यङ्गिरां शुभां।। टंकं कपालं डमरुं त्रिशूलं सम्बिभ्रती चन्द्रकलावतंसा। पिंगोर्ध्वकेशाऽसितभीमदंष्ट्रा भूयाद्विभूत्यै मम भद्रकाली।। एवं ध्यात्वा जपेन्मंत्र-मेकविंशतिवासरन्। शत्रूणां नाशनं ह्येतत्प्रकाशोऽयं सुनिश्चयः।। अष्टम्यामर्धरात्रे तु शरत्काले महानिशि। आराधिता चेच्छ्रीकाली तत्क्षणात् सिद्धिदा नृणाम्।। सर्वोपचारसम्पन्ना वस्त्ररत्नकलादिभिः। पुष्पैश्च कृष्णवर्णेश्च साधयेत्कालिकां वराम्।। वर्षादूर्ध्वमजम्मेषम्मृदं वाथ यथाविधि। दद्यात् पूर्वं महेशानि ततश्च जपमाचरेत्।। एकाहात् सिद्धिदा काली सत्यं सत्यं न संशयः। मूलमन्त्रेण रात्रौ च होमं कुर्यात् समाहितः।। मरीचलाजालवणैस्सार्षपैर्मरणं भवेत्। महाजनपदे चैव न भयं विद्यते क्वचित।। प्रेतपिण्डं समादाय गोलकं कारयेत्ततः। मध्ये वामाङ्कितं कृत्वा शत्रुरूपांश्च पुत्तलीन्।। जीवं तत्र विधायैव चिताग्नौ जुहुया ततः। तत्रायुतं जपं कुर्यात् त्रिराद्यं मारणं रिपोः।। महाज्वाला भवेत्तस्य तद्वत्ताम्रशलाकया। गुरुद्वारे प्रदद्याच्च सप्ताहान्मारणं रिपोः।। प्रत्यङ्गिग्रा मया प्रोक्ता पठिता पाठिता नरैः। लिखित्वा च करे कण्ठे बाहौ शिरसि धारयेत्।। मुच्यते सर्वपापेभ्यो नाल्पमृत्युः कथंचन। ग्राहः ऋक्षास्तथा सिंहा भूता यक्षाश्च राक्षसाः।। तस्य पीडां न कुर्वन्ति दिवि भुव्यन्तरिक्षगाः। चतुष्पदेपु दुर्गेषु वनेषूपवनेषु च।। श्मशाने दुर्गमे घोरे संग्रामे शत्रुसंकटे। ॐ ॐ ॐ ॐ ॐ कुं कुं कुं मां सां खां पां लां क्षां ॐ ह्रीं ह्रीं ॐ ॐ ह्रीं बां धां मां सां रक्षां कुरु। ॐ ह्रीं ह्रीं ॐ सः हुं ॐ ॐ क्षौं वां लां धां मां सां रक्षां कुरु। ॐ ॐ हुं प्लुं रक्षां करु। ॐ नमो विपरीतप्रत्यङ्गिरायै विद्याराज्ञि त्रैलोक्यवशंकरि तुष्टिपुष्टिकरि सर्वपीड़ापहारिणि सर्वापन्नाशिनि सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिनि मोदिन सर्वशस्त्राणां भेदिनि क्षोभिणि तथा। परमन्त्रतन्त्रयन्त्रविषचूर्णसर्वप्रयोगादीनन्येषां निवर्तयित्वा यत्कृतं तन्मेऽस्तु कलिपातिनि सर्वहिंसा मा कारयति अनुमोदयति मनसा वाचा कर्मणा ये देवासुरराक्षसास्तिर्यग्योनिसर्वहिंसका विरूपकं कुर्वन्ति मम मन्त्रतन्त्रयन्त्रविषचूर्ण सर्वप्रयोगादीनात्महस्तेन यः करोति करिष्यति कारयिष्यति तान् सर्वानन्येषां निवर्तयित्वा पातय कारय मस्तके स्वाहा।

इति श्रीविपरीतप्रत्यङ्गिरा समाप्तम्। शुभम्भूयात्।

# श्रीगुरुस्तोत्रम्

अखण्डमण्डलाकारं व्याप्तं येन चराचरम्। तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः।।१।।
अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया। चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः।।२।।
गुरुर्ब्रह्मा गुरुर्विष्णुः गुरुर्देवो महेश्वरः। गुरुरेव परंब्रह्म तस्मै श्रीगुरवे नमः।।३।।
स्थावरं जङ्गमं व्याप्तं यत्किञ्चित् सचराचरम्। तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः।।४।।
चिन्मयं व्यापि यत्सर्वं त्रैलोक्यं सचराचरम्। तत्पदं दर्शितं येन श्रीगुरवे नमः।।५।।
सर्वश्रुतिशिरोरत्नविराजितपदाम्बुजः वेदान्ताम्बुजसूर्यो यस्तस्मै श्रीगुरवे नमः।।६।।
चैतन्यः शाश्वतः शान्तो व्योमातीतो निरञ्जनः। बिन्दुनादकलातीतस्तस्मै श्रीगुरवे नमः।।७।।
ज्ञानशक्तिसमारूढः तत्त्वमालाविभूषितः भुक्तिमुक्तिप्रदाता च तस्मै श्रीगुरवे नमः।।८।।

# ।।दक्षिणामूर्त्यष्टकम्।।

विश्वं दर्पणदृश्यमाननगरीतुल्यं निजान्तर्गतं पश्यन्नात्मनि मायया बहिरिवोद्भूतं यथा निद्रया। यःसाक्षात्कुरुते प्रबोधसमये स्वात्मानमेवाद्वयं तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये।।१।।

बीजस्यान्तरिवांकुरो जगदिदं प्राङ् निर्विकल्पं पुनः मायाकल्पितदेशकालकलना वैचित्र्यचित्रीकृतम्। मायावीव विजृंभयत्यपि महायोगीव यःस्वेच्छया तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये।।२।।

यस्यैव स्फुरणं सदात्मकमसत्कल्पार्थकं भासते साक्षात्तत्वमसीति वेदवचसा यो बोधयत्याश्रितान्। यत्साक्षात्करणाद्भवेन्न पुनरावृत्तिर्भवाम्भोनिधौ तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये।।३।।

नानाच्छिद्रघटोदरस्थितमहादीपप्रभाभास्वरं ज्ञानं यस्य तु चक्षुरादिकरणद्वारा बहिः स्पन्दते। जानामीति तमेव भान्तमनुभात्येतत्समस्तं जगत् तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये।।४।।

देहं प्राणमपीन्द्रियाण्यपि चलां बुद्धिं च शून्यं विदुः स्त्री बालान्धजडोपमास्त्वहमिति भ्रान्ता भृशं वादिनः। मायाशक्तिविलासकल्पितमहाव्यामोहसंहारिणे तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये।।५।।

राहुग्रस्तदिवाकरेन्दु सदृशो मायासमाच्छादनात् सन्मात्रः करणोपसंहरणतो योऽभूत्सुषुप्तः पुमान्। प्रागस्वाप्समिति प्रबोधसमये यः प्रत्यभिज्ञायते तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये।।६।।

वाल्यादिष्वपि जाग्रदादिषु तथा सर्वास्ववस्थास्वपि व्यावृत्तास्वनुवर्तमानमहमित्यन्तः स्फुरन्तं सदा। स्वात्मानं प्रकटीकरोति भजतां यो मुद्रया भद्रया तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये।।७।।

विश्वं पश्यति कार्यकारणतया स्वस्वामिसंबन्धतः शिष्याचार्यतया तथैव पितृपुत्राद्यात्मना भेदतः। स्वप्ने जाग्रति वा य एष पुरुषो मायापरिभ्रामितः तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये।।८।।

भूरम्भांस्यनलोऽनिलोंऽबरमहर्नाथो हिमांशुः पुमान् इत्याभाति चराचरात्मकमिंद यस्यैव मूर्त्यष्टकम्। नान्यत्किञ्चन विद्यते विमृशतां यस्मात्परस्माद्विभोः तस्मै श्रीगुरुमूर्तये नम इदं श्रीदक्षिणामूर्तये।।९।।

सर्वात्मत्वमिति स्फुटीकृतमिदं यस्मादमुष्मिन्स्तवे तेनास्य श्रवणात्तदर्थमननाद्ध्यानाच्च संकीर्तनात्। सर्वात्मत्वमहाविभूतिसहितं स्यादीश्वरत्वं स्वतः सिद्ध्येत् तत्पुनरष्टधा परिणतं चैश्वर्यमव्याहतम्।।१०।।

वट विट समीपे भूमि भागे निषण्णं सकल मुनि जनानां ज्ञान दातार मारात्। त्रिभुवन गुरुमीशं दक्षिणामूर्ति देवं जननमरण दुःखच्छेददक्षं नमामि।।११।।

चित्रं वटतर्रोमूले वृद्धाः शिष्या गुरुर्युवा। गुरोस्तु मौनं व्याख्यानं शिष्यास्तु छिन्नसंशयाः।।१२।।

।।इति श्री मच्छङ्कराचार्य विरचितं श्री दक्षिणामूर्तिस्तोत्रं।।

# गणेशपञ्चरत्नम्

मुदा करात्तमोदकं सदा विमुक्तिसाधकं कलाधरावतंसकं विलासिलोकरञ्जकम्।
अनायकैकनायकं विनाशितेभदैत्यकं नताशुभाशुनाशकं नमामि तं विनायकम्।।१।।
नतेतरातिभीकरं नवोदितार्कभास्वरं नमत्सुरारिनिर्जरं नताधिकापदुद्धरम्।
सुरेश्वरं निधीश्वरं गजेश्वरं गणेश्वरं महेश्वरं तमाश्रये परात्परं निरन्तरम्।।२।।
समस्तलोकशङ्करं निरस्तदैत्यकुञ्जरं दरेतरोदरं वरं वरेभवक्त्रमक्षरम्।
कृपाकरं क्षमाकरं मुदाकरं यशस्करं नमस्करं नमस्कृतां नमस्करोमि भास्वरम्।।३।।
अकिंचनार्तिमार्जनं चिरन्तनोक्तिभाजनं पुरारिपूर्वनन्दनं सुरारिगर्वचर्वणम्।
प्रपञ्चनाशभीषणं धनञ्जयादिभूषणं कपोलदानवारणं भजे पुराणवारणम्।।४।।
नितान्तकान्तदन्तकान्तिमन्तकान्तकात्मजमचिन्त्यरूपमन्तहीनमन्तरायकृन्तनम्।
हृदन्तरे निरन्तरं वसन्तमेव योगिनां तमेकदन्तमेव तं विचिन्तयामि संततम्।।५।।
महागणेशपञ्चरत्नमादरेण योऽन्वहं प्रगायति प्रभातके हृदि स्मरन् गणेश्वरम्।
अरोगतामदोषतां सुसाहितीं सुपुत्रतां समाहितायुरष्टभूतिमभ्युपैति सोऽचिरात्।।६।।

।।श्री मच्छङ्कराचार्यकृतं गणेशपञ्चरत्नस्तोत्रं सम्पूर्णम्।।

# संकष्टहरणं गणेशाष्टकम्

ॐ अस्य श्रीसङ्कष्टहरणस्तोत्रमन्त्रस्य श्रीमहागणपतिर्देवता, सङ्कष्टहरणार्थे जपे विनियोगः।
ॐ ॐ ॐकाररूपं त्र्यहमिति च पर यत्स्वरूपं तुरीयं त्रैगुण्यातीतनीलं कलयति मनसस्तेज-सिन्दूर-मूर्तिम्।
योगीन्द्रैर्ब्रह्मरन्धैः सकलगुणमयं श्रीहरेन्द्रेण सङ्गं गं गं गं गं गणेशं गजमुखमभितो व्यापकं चिन्तयन्ति।।१
वं वं वं विघ्नराजं भजति निजभुजे दक्षिणे न्यस्तशुण्डं क्रं क्रं क्रं क्रोधमुद्रा-दलित-रिपुबलं कल्पवृक्षस्य मूले । दं दं दं दन्तमेकं दधति मुनिमुखं कामधेन्वा निषेण्यं धं धं धं धारयन्तं धनदमतिधियं सिद्धि-बुद्धि-द्वितीयम्।।२
तुं तुं तुं तुङ्गरूपं गगनपथि गतं व्याप्नुवन्तं दिगन्तान् क्लीं क्लीं क्लींकारनाथं गलित-मदमिलल्लोल-मत्तालिमालम्। ह्रीं ह्रीं ह्रींकारपिङ्ग सकलमुनिवर-दृयेयमुण्डं च शुण्डं श्रीं श्रीं श्रीं श्रीयन्तं निखिल-निधिकुलं नौमि हेरम्बबिम्बम्।।३
लौं लौं लौंकारमाद्यं प्रणवमिव पदं मन्त्रमुक्तावलीनां शुद्धं विघ्नेशबीजं शशिकरसदृशं योगिनां ध्यानगम्यम्। डं डं डं डामरूपं दलितभवभयं सूर्यकोटिप्रकाशं यं यं यं यज्ञनाथं जपति मुनिवरो बाह्यमभ्यन्तरं च।।४
हुं हुं हुं हेमवर्णं श्रुति-गणितगुशं शूर्यकर्णं कृपालुं ध्येयं सूर्यस्य बिम्बं ह्युरसि च विलसत् सर्पयज्ञोपवीतम्। स्वाहा-हुंफट्-नमोऽन्तैष्ठठठठ-सहितैः पल्लवैः सेव्यमानं मन्त्राणां सप्तकोटि-प्रगुणितमहिमाधारमीशं प्रपद्ये।।५
पूर्वं पीठं त्रिकोणं तदुपरि रुचिरं षट्कपत्रं पवित्रं यस्योर्ध्वं शुद्धरेखा वसुदलकमलं वा स्वतेजश्चतुस्त्रम्। मध्ये हुङ्कारबीजं तदनु भगवतः स्वाङ्गषट्कं षडस्त्रे अष्टौ शक्तीश्च सिद्धीर्बहुल-गणपतिर्विष्टरश्चाऽष्टकं च।।६
धर्माद्यष्टौ प्रसिद्धा दशदिशि विदितां वा ध्वजाल्यः कपालं तस्य क्षेत्रादिनाथं मुनिकुलमखिलं मन्त्रमुद्रामहेशम्।
एवं यो भक्तियुक्तो जपति गणपतिं पुष्प-धूपा-ऽक्षताद्यनैवेद्यर्मोदकानां स्तुतियुत-विलसद्-गीतवादित्र-नादैः।।७
राजानस्तस्य भृत्या इव युवतिकुलं दासवत् सर्वदास्ते लक्ष्मीः सर्वाङ्गयुक्ता श्रयति च सदनं किङ्कराः सर्वलोकाः।
पुत्राः पुत्र्यः पवित्रा रणभुवि विजयी द्यूतवादेऽपि वीरो यस्येशो विघ्नराजो निवसति हृदये भक्तिभाग्यस्य रुद्रः।।८

# ।।अथ ऋण हरण स्तोत्र।।

कैलाशपर्वते रम्ये शम्भुं चन्द्रार्धशेखरम्। षडाम्नायसमायुक्तं पप्रच्छ नगकन्यका।।

**पार्वत्युवाच -** देवेश परमेशान सर्वशास्त्रार्थपारग। उपायमृणनाशस्य कृपया वद साम्प्रतम्।।

**शिव उवाच -** सम्यक् पृष्टं त्वया भद्रे लोकानां हितकाम्यया। तत्सर्वं सम्प्रवक्ष्यामि सावधानावधारय।।

**विनियोगः -** ॐ अस्य श्रीऋणहरणकर्तृगणपतिस्तोत्रमन्त्रस्य सदाशिव ऋषिः, अनुष्टुप छन्दः, श्रीऋणहरणकर्तृगणपतिर्देवता, ग्लों बीजम्, गः शक्तिः, गों कीलकम्, मम सकलऋणनाशने जपे विनियोगः।

**ऋष्यादिन्यासः -** ॐ सदाशिवर्षये नमः शिरसि। अनुष्टुप् छन्दसे नमः मुखे। श्रीऋणहर्तृगणेशदेवतायै नमः हृदि। ग्लौं बीजाय नमः गुह्ये (मूलाधारे)। गः शक्तये नमः पादयोः। गों कीलकाय नमः सर्वाङ्गे।

**करन्यासः -** 'ॐ गणेश' अङ्गुष्ठाभ्यां नमः। 'ऋणं छिन्धि' तर्जनीभ्यां नमः। 'वरेण्यम्' मध्यमाभ्यां नमः। 'हुम्' अनामिकाभ्यां नमः। 'नमः' कनिष्ठिकाभ्यां नमः। 'फट्' करतलकरपृष्ठाभ्यां नमः।

**हृदयादिन्यासः -** 'ॐ गणेश' हृदयाय नमः। 'ऋणं छिन्धि' शिरसे स्वाहा। 'वरेण्यम्' शिखायै वषट् । 'हुं' कवचाय हुम्। 'नमः' नेत्रत्रयाय वौषट्। 'फट्' अस्त्राय फट्।

**ध्यानम् -** सिन्दूरवर्णं द्विभुजं गणेशं लम्बोदरं पद्मदले निविष्टम्। ब्रह्मादिदेवैः परिसेव्यमानं सिद्धैर्युतं तं प्रणमामि देवम्।।

**स्तोत्रपाठः -** सृष्ट्यादौ ब्रह्मणा सम्यक् पूजितः फलसिद्धये। सदैव पार्वतीपुत्र ऋणनाशं करोतु मे।।१।।

त्रिपुरस्य वधात्पूर्वं शम्भुना सम्यगर्चितः। सदैव पार्वतीपुत्र ऋणनाशं करोतु मे।।२।।

हिरण्यकश्यपादीनां वधार्थे विष्णुनार्चितः। सदैव पार्वतीपुत्र ऋणनाशं करोतु मे।।३।।

महिषस्य वधे देव्या गणनाथः प्रपूजितः। सदैव पार्वतीपुत्र ऋणनाशं करोतु मे।।४।।

तारकस्य वधात्पूर्वं कुमारेण प्रपूजितः। सदैव पार्वतीपुत्र ऋणनाशं करोतु मे।।५।।

भास्करेण गणेशस्तु पूतिजश्छविसिद्धये। सदैव पार्वतीपुत्र ऋणनाशं करोतु मे।।६।।

शशिना कान्तिसिद्ध्यर्थं पूजितो गणनायकः। सदैव पार्वतीपुत्र ऋणनाशं करोतु मे।।७।।

पालनाय च तपसा विश्वामित्रेण पूजितः। सदैव पार्वतीपुत्र ऋणनाशं करोतु मे।।८।।

इदं त्वृणहरं स्तोत्रं तीव्रदारिद्र्यनाशनम्। एकवारं पठेन्नित्यं वर्षमेकं समाहितः।।९।।

दारिद्र्यं दारुणं त्यक्त्वा कुबेरसमतां व्रजेत्। 'फडन्तोऽयं महामन्त्रः सार्धपञ्चदशाक्षरः।।१०।।

अस्यैवायुतसंख्याभिः पुरश्चरणमीरितम्। सहस्रावर्तनात् सद्यो वाञ्छितं लभते फलम्।।
भूत-प्रेत-पिशाचानां नाशनं स्मृतिमात्रतः।।११।।
।।इति श्रीकृष्णयामलतन्त्रागत-उमामहेश्वरसंवादे ऋणहर्तागणेशस्तोत्रं सम्पूर्णम्।।
(ऋणहर्ता गणेशस्तोत्र के अन्त में 'ॐ गणेश ऋणं छिन्धि वरेण्यं हुं नमः फट्' इस ऋणहर्ता महामन्त्र का एक बार जप करने से पाठकर्ता का अन्तःकरण पवित्र हो जाता है। छः महीने तक प्रतिदिन उक्त मन्त्र का एक हजार जप करने से मनुष्य गणेशजी का प्रिय बन जाता है। वह ज्ञान में बृहस्पति और धन में कुबेर के सदृश हो सकता है। इसका एक पुरश्चरण दस हजार जप का बताया गया है। एक लाख जप करने से भलीभांति मनोऽभिलषित फल की प्राप्ति हो सकती है।)
गणेशजी की पार्थीव मूर्ति बनाकर साङ्गोपाङ्ग पूजा करे तदुनपरान्त उपरोक्त जाप पाठ करने से अतिशीघ्र अनुष्ठान सफल होता है।

## ।।आदित्य हृदयस्तोत्रम्।।

**विनियोग -** ॐ अस्य आदित्यहृदयस्तोत्रस्यागस्त्यऋषिरनुष्टुप्छन्दः, आदित्यहृदयभूतो भगवान् ब्रह्मा देवता निरस्ताशेषविघ्नतया ब्रह्मविद्यासिद्धौ सर्वत्र जयसिद्धौ च विनियोगः।
**ऋष्यादिन्यास -** ॐ अगस्त्यऋषये नमः, शिरसि। अनुष्टुप्छन्दसे नमः, मुखे। आदित्यहृदयभूतब्रह्मदेवतायै नमः, हृदि। ॐ बीजाय नमः, गुह्ये। रश्मिमते शक्तये नमः, पादयोः। ॐ तत्सवितुरित्यादिगायत्रीकीलकाय नमः, नाभौ।
**करन्यास -** इस स्तोत्र के अङ्गन्यास और करन्यास तीन प्रकार से किये जाते हैं। केवल प्रणव से, गायत्रीमन्त्र से अथवा 'रश्मिमते नमः' इत्यादि छः नाम मन्त्रों से। यहां नाम-मन्त्रों से किये जानेवाले न्यास का प्रकार बताया गया है -
ॐ रश्मिमते अङ्गुष्ठाभ्यां नमः। ॐ समुद्यते तर्जनीभ्यां नमः। ॐ देवासुरनमस्कृताय मध्यमाभ्यां नमः। ॐ विवस्वते अनामिकाभ्यां नमः। ॐ भास्कराय कनिष्ठिकाभ्यां नमः। ॐ भुवनेश्वराय करतलकरपृष्ठाभ्यां नमः।
**हृदयादि अङ्गन्यास -** ॐ रश्मिमते हृदयाय नमः। ॐ समुद्यते शिरसे स्वाहा। ॐ देवासुरनमस्कृताय शिखायै वषट्। ॐ विवस्वते कवचाय हुम्। ॐ भास्कराय नेत्रत्रयाय वौषट् । ॐ भुवनेश्वराय अस्त्राय फट् । इस प्रकार न्यास करके निम्नाङ्कित मन्त्र से भगवान सूर्य का ध्यान एवं नमस्कार करना चाहिये -
ॐ भूर्भुवः स्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात्।
तत्पश्चात् 'आदित्यहृदय' स्तोत्र का पाठ करना चाहिये।

